सिद्धो भवभृतां प्रभुः सर्वज्ञ एव। न खलु ज्ञस्वभावस्य कश्चिदगोचरोस्ति यन्न क्रमेत, तत्स्वभावान्तरप्रतिषेधात्। कुतः पुनस्तस्याज्ञस्वलक्षणस्वभावान्तरप्रतिषेधः सिद्धो यतोसौ ज्ञस्वभाव एव स्यात्? सर्वथार्थस्तस्य विषयः स्यात्? ततस्तं क्रमेतैव? इति चेत्, चोदनाबलाद्भूताद्यशेषार्थज्ञानान्यथानुपपत्तेः। सोयं चोदना हि भूतं भवन्तं भविष्यन्तं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलं पुरुषविशेषानिति स्वयं प्रतीयन् सकलार्थज्ञानस्वभावतामात्मनो न प्रत्येतीति कथं स्वस्थः? तत्र न ज्ञानमात्मनो भिन्नमेव मीमांसकस्य कथञ्चिदभेदोपगमादन्यथा मतान्तरप्रसङ्गात्। ततो नाज्ञस्वभावः पुरुषः कश्चिदपि विषये, सर्वविषये, चोदनाज्ञानोत्पत्तेर्विकल्पज्ञानोत्पत्तेर्वा सर्वत्र तदनुपपत्तौ विधिप्रतिषेधविचाराघटनात्। कथमेवं कस्यचित्क्वचिदज्ञानं स्यादिति चेत्, उच्यते। चेतनस्य सतः सम्बन्ध्यन्तरं मोहोदयकारणकं मदिरादिवत्। तत्कुतः सिद्धम्? विवादाध्यासितो जीवस्य मोहोदयः सम्बन्ध्यन्तरकारणको मोहोदयत्वान्मदिराकारणकमोहोदयवदित्यनुमानात्। यत्तत्सम्बन्ध्यन्तरं तदात्मनो ज्ञानावरणादि कर्मेति। तदभावे साकल्येन विगतव्यामोहः सर्वमतीतामागतवर्तमानं पश्यति प्रत्यासत्तिविप्रकर्षयोरकिञ्चित्करत्वात्। कथं पुनर्ज्ञानावरणादिसम्बन्ध्यन्तरस्याभावे साकल्येन विगतव्यामोहः स्याद्यतः सर्वमतीतामागतवर्तमानानन्तार्थव्यञ्जनपर्यायात्मकं जीवादितत्त्वं साक्षात्कुर्वीतेति चेत्, इमे ब्रूमहे। यद्यस्मिन् सत्येव भवति तत्तदभावे न भवत्येव। यथाग्नेरभावे धूमः। सम्बन्ध्यन्तरे सत्येव भवति चात्मनो व्यामोहस्तस्मात्तदभावे स न भवतीति निश्चीयते। देशकालान्तर

प्रत्यासन्नमेव पश्यद्विरतव्यामोहोऽपि सर्वात्मना, न पुनर्विप्रकृष्टमित्ययुक्तं, प्रत्यासत्तेर्ज्ञानाकारणत्वा
विभ्रमरूपस्य चाज्ञानानिबन्धनत्वात्, तद्भावेऽपि ज्ञानाज्ञानयोरभावान्नयनतारकाञ्जनचन्द्रार्कादिविषय।
योग्यतासद्भावेतराभ्यां कचित्सद्भावे योग्यतैव ज्ञानकारणं, प्रत्यासत्तिविप्रकर्षयोरकिंचित्करत्वात्। सा
पुनर्योग्यता देशतः कार्त्स्न्यतो वा व्यामोहविगमस्तत्प्रतिबन्धिकर्मक्षयोपशमक्षयलक्षणः। इति साक
ल्येन विरतव्यामोहः सर्वं पश्यत्येव। तदुक्तं “ज्ञो ज्ञेये कथमज्ञः स्यादसति प्रतिबन्धने। दाह्येऽग्नि
र्दाहको न स्यादसति प्रतिबन्धने ॥ १ ॥” इति। अत एवाक्षानपेक्षाऽञ्जनादिसंस्कृतचक्षुषो यथालोकाऽन
पेक्षा। अत एव। कुत एष? साकल्येन विरतव्यामोहत्वादेव सर्वदर्शनादेव वा। यो हि देशतो विरत
व्यामोहः किंचिदेवास्फुटं पश्यति वा तस्यैवाक्षापेक्षा लक्ष्यते न पुनस्तद्विलक्षणस्य प्रक्षीणसकलव्यामोह
स्य सर्वदर्शिनः, सर्वज्ञस्याविरोधात्। न हि सर्वार्थैः सकृदक्षसम्बन्धः संभवति साक्षात्परम्परया वा।
ननु चावधिमनःपर्ययज्ञानिनोर्देशतो विरतव्यामोहयोरसर्वदर्शनयोः कथमक्षानपेक्षा सलक्षणीया? तथा
वरणक्षयोपशमातिशयवशात्स्वविषये परिस्फुटत्वादिति ब्रूमः। न चैव साकल्येन विरतव्यामोहत्वस्य सर्व
दर्शनस्य वानैकान्तिकत्वं शङ्कनीयं, विपक्षेऽक्षापेक्षे मतिश्रुतज्ञाने तदसंभवात्। अवधिमनःपर्ययज्ञाने
तदसंभवात् पक्षाव्यापकत्वाद्धेतुत्वमिति चेत्, न, सकलप्रत्यक्षस्यैव पक्षत्ववचनात्, तत्र चास्य हेतोः सद्भा
वात्, विकलप्रत्यक्षस्यावधिमनःपर्ययाख्यस्यापक्षीकरणात्। न चास्मदादिप्रत्यक्षेऽक्षापेक्षोपलक्षणात्सकलवि

त्यक्षेपि सास्त्यवेति वक्तुं शक्यम् अञ्जनादिभिरसंस्कृतचक्षुषोऽस्मदादेरालोकापेक्षोपलक्षणात् तत्संस्कृतचक्षुषोपि कस्यचिदालोकापेक्षाप्रसङ्गात्। नक्तंचराणामालोकापायेपि स्पष्टरूपावलोकनप्रसिद्धेर्नालोको नियत कारण प्रत्यक्षस्येति चेत्, तर्हि सत्यस्वप्नज्ञानस्येक्षणिकाविज्ञानस्य च स्पष्टस्य चक्षुराद्यनपेक्षस्य प्रसिद्धेरक्षमपि नियतं प्रत्यक्षकारण मा भूत्। ततो यथाञ्जनादिसंस्कृतचक्षुषामालोकानपेक्षा स्फुट रूपेक्षणे तथा साकल्येन विरतव्यामोहस्य सर्वसाक्षात्करणेऽक्षानपेक्षा। इति करणक्रमव्यवधानातिवर्तिसकलप्रत्यक्षो मयभूतां गुरुः प्रसिद्धस्त्येव।

यतश्चासौ न देवागमादिविभूतिमत्त्वादन्यास्मं यदिरपि विद्यसत्यविग्रहादिमहोदयाश्रयत्वाद्वा महान्, नापि तीर्थकृत्त्वमात्रात्, यतश्च तीर्थच्छेदसम्प्रदायोपि वैदिको नियोगभावनादिसम्प्रदायो न सत्यार्थकः प्रत्यक्षैकप्रमाणवादिसम्प्रदायस्तत्त्वोपप्लववादिसम्प्रदायो वा सर्वास्तवादो वा न प्रमाणभूतो व्यवतिष्ठते, ततः सुनिश्चितासम्भवद्बाधकप्रमाणो भगवन् भवानेव मयभूतां प्रभुरात्यन्तिकदोषावरणहान्या साक्षात्प्रत्याशेषतत्त्वार्थत्वेन च मुनिभिः सूत्रकारादिभिरभिष्टूयते। इति समन्तभद्राचार्यैर्निरूपिते सति कुतस्ताव दात्यन्तिकी दोषावरणहानिर्मेयि विनिश्चितेति भगवता पर्यनुयुक्ता इवाचार्याः प्राहुः।—

परस्परविरुद्धसमयाभिधायिन इति भाष्ये हेतुधर्मे विशेषणं, परस्परविरुद्धसमयाभिधायित्वान्न सर्वे मयदर्शिन

पत्र १४ पृष्ठ १ पंक्ति १४।

इत्यर्थः । न कस्यचिदिति सुगतादिकं पक्षीकृत्य महत्त्वे साध्ये तीर्थकरत्वहेतोः कपिलादिना व्यभिचारादित्यर्थः । †नैव भयादिस्यापातमिति कारकेति शेषः । ‡अत एवस्यापि, लब्धावकाशस्य मीमांसकस्य शङ्कैव §श्रुतेरेवेति, अपौरुषयत्वेन तस्याः प्रमाजनकत्वनिश्चयात् पौरुषेयत्वे भ्रमादिसम्भवाद्प्रामाण्यशङ्कया अनिरासादिति भावः, ‖इत्यपर इति मीमांसकः प्रवृत्त इत्यर्थः । तस्यापि निराकरणमाघ्रस्याऽनयैव कारिकयेत्याशयवानाह—' न प्रत्यपीत्यमेवेत्यादि, ¶भावना यदीति, *वाक्यार्थो विधिवाक्यार्थः, अत्र भावना वाक्यार्थो भाट्टानां, नियोग प्राभाकराणां, ×कार्येऽर्थे इति, ÷चोदनाशान विधिप्रत्ययघटितवाक्यार्थज्ञानम्, ‡स्वरूपे कार्यतानुपरक्ते । अत्र हि कार्यान्वितशक्तिवादिनः प्रवृत्तौ कार्यत्वविशिष्टज्ञानस्य हेतुत्वावधारणात् प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धप्रवृत्तौ हेत्वाकाङ्क्षायामुपस्थितत्वा च्छब्दमेव तथाऽवधारयंस्तटस्थस्तमिर्याहिको कार्यत्वान्विते शब्दत्वावच्छेदेन शक्तिं कल्पयति, तदनु चावापोद्वापाभ्यां घटादिपदे शक्तिगृहमायमत्यनानुरोधात्कार्यान्वितघटादावेव तां कल्पयति नतु केवलघटादावेव, आद्यव्युत्पत्तिविरोधादिति, कार्यताबोधकपदसमभिव्याहाराभावे सर्वं वाक्यं मूकमेव, व्यवहारस्त्वसंसर्गाग्रहात्, न च सर्वस्य पदस्य कार्यान्विते शक्तेस्तद्बोधकपदासमभिव्याहारो दुर्वचः, शक्तिर्द्विविधाऽनुभाविका स्मारिका च, आद्या कार्यस्यान्विते, द्वितीया च ज्ञाता विति व्यवस्थितेः, तथा च घटादिपदात्कार्यत्वानुपस्थितेर्न तदन्वयबोधः, कार्यस्यान्वयबोधे तदुपस्थितेरपि हेतुत्वादिति

* पत्र १४ पृ २ पं २ । † पत्र १४ पृ २ पं २ । ‡ प १४ पृ २ पं ३ । § पत्र १४ पृ २ पं ३ । ‖ पत्र १४ पृ २ पं ३ ।
¶ पत्र १४ पृ २ पं ७ । * पत्र १४ पृ २ पं ७ । × पत्र १४ पृ २ पं ८ । ÷ पत्र १४ पृ २ पं ८ । ‡ पत्र १४ पृ २ पं ८ ।

नार्थवादस्य प्रामाण्यमित्याहुः, तच, आवापोद्वापाभ्यां लाघवात् घटादिमात्र एव घटादिपदशक्तिग्रहात् कार्यत्वान्वयस्यचान्य-लभ्यत्वात् प्रथमं प्रवृत्तस्यावच्छेदेन कार्यत्वान्वितशक्तिग्रहेऽपि यदा कार्यत्वस्यान्यलभ्यत्वोपस्थितिस्तदा सर्वांशस्यागेन शुद्धघटादौ घटादिपदशक्तिग्रहोचितस्यात् प्रथमप्रवृत्तकल्पनायामपरमप्रवृत्तकल्पनया लाघवतर्कसध्रीचीनया बाधात् । अत एव स्वरूपपरशब्दादिभ्योऽनुभवसिद्धोऽन्वयानुभव उपपद्यते तत्रासंसर्गाग्रहमात्रेण व्यवहारस्वीकारेऽन्यत्रापि तथोपपत्तौ शब्दप्रामाण्यप्रत्याशया अप्यभावापत्तेरिति नैयायिकादयः । ' *द्रव्योभ्येविति ' अत्र कार्यान्वितव्युत्पत्तीयबोधे कार्यविषयकत्वेन स्वरूपव्युत्पत्तीयबोधे च स्वरूपविषयकत्वेन वाक्यस्य प्रामाण्यमिति स्याद्वादाश्रयणे एकान्तपक्षद्वयनिरासो द्रष्टव्यः । कुञ्जशक्तिवादस्तु मर्वस्य मर्यादत्वे व्युत्पत्तिकुञ्जस्य एव सङ्कुच्छते, अन्यथार्थवादेऽपि शक्तिग्रहाधीनकार्यत्वोपस्थितेः शाब्दबोध तत्प्रवेशधौव्यप्रसङ्गात्, नयविशेषाधीने तु प्रामाण्याप्रामाण्ये तत्र तथापेक्षितत्वादेवानिरुद्धे इति दिक् । †लिङादिप्रत्ययार्थ इति, आदिना लोट्तव्यग्रहणम् । अन्यनिरपेक्षो नियोगकृत्यादिनाऽविशिष्टस्तस्यान्यलभ्यत्वेन तदन्वयाभावेन विधिशब्दस्याप्रतिपादनात् । अत्रत्य प्राभाकराणां मूलप्रक्रिया–' स्वर्गकामो यजेतेत्यत्र स्वर्गकामस्येष्टसाधनं याग इति तात्पर्यार्थः, प्रकृते इष्टस्य स्वर्गस्य साधनतया याग विधिना बोधयितुमशक्यत्वात्, आशुविनाशिनो यागस्य कालान्तरभाविस्वर्गं प्रति साक्षात् साधनताया बाधितत्वात्, परम्परया तत्साधनत्वस्य च परम्पराघटकापूर्वानुपस्थितत्वेनानुपस्थितेः, कार्यत्वमपि नात्र विधिना बोधयितुं शक्यम् । योग्यताभावात्, शाब्दे च योग्यताज्ञानस्य हेतुत्वात्, प्रकृते हि कामिकार्यत्वान्वये इष्टसाधनत्वमन्यप्रयोजकं रूपं

* पत्र १४ पृ. २ पं ८ । † पत्र १४ पृ २ पं ११ ।

द्वेष्यकनियोगानुभवानुरोधेन कार्यप्रेरणयो *सम्बन्धो नियोगः कल्प्यत इति षष्ठः, विशेषणविशेष्यभावे विनिगमका-
भावात् स्यात् प्रयोगानुभूयमानत्वाच्च तेषां कार्यप्रेरणासम्बन्धानां †समुदायो नियोगः सम्बन्धत्रिषु शक्तिकल्पनायामिति
सप्तमः, ‡अनुभवस्य भावसिद्धिनिर्मुक्तो घटादिवत्कार्यस्याप्यनादिवत्प्रेरकस्याच्च कार्यप्रेरणोभयस्वभावरहितो प्रकारान्तरमेव नि
योगस्वाविर्भावस्यैवावस्थाविशेषस्य वेदवाक्यात् प्रतीतेरसम्बन्ध एव हि वाक्यमसम्बन्ध एव च वाक्यार्थ इति सिद्धान्तादित्यष्टमः
§यं यारूढा यस्यान्वतया यत्र स यत्रारूढो विषयारूढत्वाभिमानो नियोग इत्यर्थः। अत्र चाऽऽरूढत्वेऽभिमाने च सिद्धान्त किं,
आरूढत्वे निरूपितत्वेन विषयस्य, तस्य च स्वरूपसम्बन्धेनाभिमाने, तस्य च समवायेन अभिन्नान्वय इति यजेत स्वर्गकाम
इत्यत्रो यागारूढत्वाभिमानवान् स्वर्गकाम इति बोधइति नवमः, ऽभोग्यरूपो नियोगइति दशमः। अत्र लिङो भोग्ये
शक्तिस्तस्य भोगसम्बन्धेन स्वर्गकामान्वितस्य तादात्म्येन यागेऽन्वय इति स्वर्गकामभोग्यो याग इति बोधः, यद्यपि भोग्यत्वं
फलनिष्ठं तथापि विषयनिष्ठतया व्याख्यातं प्रवर्तकमित्येतत्प्रकारानुसरणम् १०। ‖पुरुष एव नियोग इत्येकादशः, अत्र कार्यत्वेन
धर्मे कार्यविशिष्टत्वेन कार्यविशिष्टे वा शक्तेः स्वर्गकामो यागकार्यो यागकार्यविशिष्ट इति वा बोधः। +किञ्च नियोगः सन्द
तोऽपीत्यादि निमित्तप्रामाण्यकृतावशेषितनियोगाभ्युपगमे दोषः, अन्यथा नियोगातिरिक्तविधिवाक्यार्थवादेऽप्येतदुपलक्षण
कृतदोषानतिवृत्तेर्यद्यप्यभिमतामयपेन वैदोषाभिधानमिति द्रष्टव्यम्। अस्मान्तमपक्षी नियोगहेतुत्वे न दोष इत्याशयवान्

पत्र १५ इ. १ पं ५। +पत्र १५ इ १ पं ७। ‡पत्र १५ इ १ पं ८। §पत्र १५ इ १ पं ९। ‖पत्र १५

प्रकृते–' तेषामित्यादि, ' तेषां तथागतादीनाम्, अभ्रान्तत्वस्य प्रवृत्तिविशेषणत्वे नियोगप्रामाण्यस्य सर्वप्रवृत्त्यविशेषे तस्या अभ्रान्तत्वं सर्वं प्रत्यविशिष्टं यद्यापद्यतीति पुरुषविशेषणत्वं वाच्यम्, तत्र च नोक्तदोषोद्धारः, परस्परापेक्षया द्वयोरपि भ्रान्तत्वादिरपाश्रयत्वानुपपत्तिः–'परेषामपीत्यादि' न च वेदप्रामाण्यांशमात्रेऽभ्रान्तत्वोपादानाददोषो गुरूणामिव वेदान्तिनो नियोगस्य प्रवर्तकत्वप्रसङ्गात्, यत्किञ्चिद्व्यावर्तवेदप्रामाण्यविकल्पकृतदोषस्य दुरुद्धरत्वाच्च, तदा फलार्थितैव प्रवर्तिका न नियोगस्तु । यद्यपि फलार्थितामात्रान्न प्रवृत्तिः, किन्तु फलार्थितया समभिव्याहृतत्वसम्भवौ तत्साधनताज्ञानाद् यागादौ चिकीर्षाद्वाराप्रवृत्तिस्तत्साधनता च साक्षात्साधिता सती परम्परयैव सुखहेतुरिति तद्घटकापूर्वोपस्थितिस्त्वयं सुखकार्यरूप नियोगे लिङः शक्तिकल्पनाभियोगस्य प्रवर्तकत्वमावश्यकम्, तथाऽपि लिङः शक्तिर्न कार्यत्वविशिष्टे गौरवात्, किन्तु कार्यत्व एव लाघवात्, एवं हि लिङ्पदत्वेनैव कार्यत्वानुभावकता ननु लौकिकलिङ्पदत्वेनेति, न च यागेऽन्वय- प्रयोजकेष्टसाधनत्वरूपयोग्यताज्ञानासम्भवात् स्वर्गकामकार्यत्वान्वयबोधासम्भवः, अन्वयप्रयोजकरूपवत्त्वस्य मेकानन्व यितोयेऽपि सत्त्वेन योग्यतास्वनिरासादेकपदार्थेऽपरपदार्थसंसर्गवत्त्वस्यैव योग्यतात्वव्यवस्थापनात्, तस्य च ज्ञान संशयनिश्चयसाधारणं हेतुरिति यागे स्वर्गकामकार्यत्वसंशयसम्भवात् कथं न योग्यताज्ञानम् । न चेष्टसाधनत्वमपि लिङा बोधयितुमशक्यं, रूपवानयम् इत्यत्र रूपपदेन नीलत्वादीन्मुखस्य रूपसामान्यस्येव साक्षात्परम्परात्वमुखस्य साधनतासामा न्यस्य लिङा बोधने बाधकाभावात् , न चैकविशेषाभावे शाब्दसामान्यज्ञानस्य तद्वितरविशेषप्रकारतानियतत्वात् घटेन जल-

पत्र १७ पृ १ पं १।

भावः यत्र घटत्वप्रकारक छिद्रेतरत्वेन घटज्ञानवत् प्रकृते साक्षात्सम्बन्धेन परम्परात्वप्रकारकज्ञानमाभ्युपेयं तत्र न सम्भवति द्वारानुपस्थितेरित्यपि शङ्कनीयम्, घटेन जलमाहरेत्यत्र योग्यतया वस्तुतश्छिद्रेतरघटान्वयेऽपि छिद्रेतरत्वेनानन्वयात्तदुपस्थापकपदाभावात् मानाभावेन तद्भानाभ्युपगमात्, यद्वा प्रकृतेऽपि साक्षादन्यसाधनत्वप्रकारेणान्वयो नीलघटे रूपवान् घट इत्यत्र रूपस्य नीलतरत्वेन। नवनमपि क्वचिदनुपपत्तिर्येनापूर्वोपस्थितये नियोग आश्रीयेतेति नियोगदूषणं बोध्यम्।

विधियतीति अलौकिकश्रमस्वरूपविधिवादित्यर्थः। स्वज्ञानादेव प्राभाकराभिमतनियोगाज्ञानाल्लौकिकानां प्रवृत्तेस्तस्य वाच्यार्थत्वायोगात्, श्रवणविधेस्तु वाक्यार्थत्वं काममनुमन्यामह एव, यतस्तत्र व्यवस्थित एव प्रेरणानियोज्यवर्जितनियोगाभ्युपगमादिना प्रत्यक्षनियोगपक्षदूषणानि घटन्ते। तत्र यस्य बुद्धिः प्रवृत्तिजननीमिच्छां सूते सोऽभिधेयविधिः, तज्ज्ञापकश्चाभिधायकविधिः, तदुक्तमुदयनाचार्यैः "प्रवृत्तिः कृतिरेवात्र, सा चेच्छातो यतश्च सा। तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥२॥" इति, प्रवृत्तिजननी चेच्छा कृतिसाध्यत्वप्रकारिका, तज्जननी च तादृशी धीः, न तु कृतिसाध्यत्वप्रकारकज्ञानाभावमात्रं, गौरवात् मधुदा चिकीर्षोत्पत्त्यापत्तेश्च, अतः कृतिसाध्यत्वमेव विध्यर्थः, न च कृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वे मधुविषसम्पृक्तान्नभोजने मध्यक्षीकरणे प्रवृत्त्यापत्तिः, स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्तकत्वात्, "काम्ये हि यागपाकादौ कामना स्याद्विशेषणम्" ततश्च बलवदनिष्टाननुबन्धित्वसमभिव्याहृतकार्यताज्ञानात् कार्यताज्ञानं प्रवर्तकम्, न च तदुक्तम्यत्र तृप्तस्य भोजने न प्रवृत्तिः तदानीं कामनायाः पुरुषविशेषणत्वाभावात्, नित्ये च शौचादिकं पुरुषविशेषणम्, तेन

पत्र १०७ पं २।

शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात् तत्र प्रवृत्तिसम्भव, यद्वा नित्ये शौचादिमत्त्वप्रतिसन्धानजन्यमन्यत्रेष्टसाधनताज्ञानजन्यमिष्टसाधनताज्ञानकालीनं वा कार्यताज्ञानं प्रवृत्तिहेतुः, प्रवृत्तिसामान्ये च कार्यताज्ञानमिति न दोषः, न चैवं लाघवाद् बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानमेव हेतुरस्त्विति वाच्यम्, नित्ये तदभावात्, साध्यत्वसाधनत्वयोर्विरोधेनेष्टसाधनत्वकृतिसाध्यत्वयोर्युगपद् ज्ञातुमशक्यत्वाच्च, साध्यत्वं ह्यसिद्धस्य धर्मः साधनत्वं च सिद्धस्येति कालभेदादेवोभयग्रहसम्भवादिति प्राभाकरमतानुसारिणः। जरन्नैयायिकास्तु बलवदनिष्टाननुबन्धीष्टसाधनताविषयककृतिसाध्यताज्ञानमेव लाघवात् प्रवर्तकं नत्विष्टसाधनताज्ञानजन्यकार्यताज्ञानादि, गौरवात्। न च फलाभावान्नित्ये इष्टसाधनताज्ञानासम्भवः, नित्येऽपि चतुर्धा फलश्रुतेर्यत्रापि न फलश्रुतिस्तत्रापि विश्वजिन्न्यायात् स्वर्गस्य प्रत्यवायपरिहारस्य वा फलस्य कल्पनात्, न चैवं कामनाधीनकर्तव्यत्वेन नित्ये नित्यत्वहानिः, यदकरणे प्रत्यवायस्तस्यैव नित्यत्वात्, न चैव कामनाया अधिकारविशेषणत्वात् तदभावेऽशुचेरिवानधिकारिणो नित्येऽप्रवृत्तौ प्रत्यवायानापत्तिः, कामनेतरयावदधिकारवतामकरणस्यैव प्रत्यवायहेतुत्वकल्पनात्, न च साध्यत्वसाधनत्वयोर्विरोधः, एकस्मिन् पाके ओदनसाधनत्वकृतिसाध्यत्वयोः सर्वसिद्धत्वेन तयोरविरोधात्, अन्यथा परस्येष्टसाधनताज्ञानकालीनकार्यताज्ञानस्य प्रवर्तकत्वाभ्युपगमानुपपत्तेः, विध्यर्थोऽपि बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वमेव, कलञ्जभक्षणे इष्टसाधनत्वकृतिसाध्यत्वसत्त्वेऽपि बलवदनिष्टाननुबन्धित्वाभावाद् 'न कलञ्जं भक्षयेत्' इति विध्यर्थनिषेधोपपत्तिरित्याहुः। नव्यास्तु विशेषणविशेष्यभावे विनिगमकाभावाद्बलवदनिष्टाननुबन्धित्वादित्रये पृथगेव शक्तिः, कारणतापि प्रत्येकज्ञानत्वेनैव, वस्तुतः कृतिसाध्यताधीत्वेनैव चिकीर्षां प्रति हेतुत्वम्, इष्टसाधन

ऽपि मुखादौ चिकीर्षोत्पत्तेरिष्टत्वात्, मण्डलीकरणादौ चोपायेच्छासामान्यसामग्र्यभावेनैव तदभावात्, का पुनः सेति चेत्, इष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं चेत्याहुः । केचित्त्विष्टसाधनत्वमेव विध्यर्थः । न तु कृतिसाध्यत्वमपि, यागादौ मन्त्र लोकत एव तस्यावगम्यमानत्वेनान्यलभ्यत्वात्, अत एव प्रवृत्तिकारणमिष्टसाधनताज्ञानमेव न तु कृतिसाध्यताज्ञानमपि, बलवदनिष्टाननुबन्धित्वज्ञानं च न हेतुः । प्रवृत्तौ कार्यसहभावेन द्वेषस्य प्रतिबन्धकत्वेन तदभावेनान्यथासिद्धत्वात्, आस्तिककामुकस्यागम्यागमनादौ नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावकालीनप्रवृत्तौ व्यभिचाराच्च, न चोत्कटरागेण नरकसाधनत्वज्ञानमेव कामुकस्य जन्यत इति शक्यं वक्तुम्, आस्तिकत्वस्याभावात् तस्य समानविषयतया द्वेषप्रतिबन्धकत्वेन एव साधनाच्च । तदुक्तं मण्डनमिश्रैः—"पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥१॥" इत्याहुः, परे तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्तकम्, अनागतस्य तस्य ज्ञातुमशक्यत्वात्, किन्तु यादृशस्य पुंसः कृतिसाध्यं यत् दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्तते प्रेक्षावान्, यथा ओदनकामस्य तत्साधनसाधनवस्तुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवर्तत इत्याहुः, तन्न, स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्रेकादिना सम्भोगादिप्रवृत्तौ च तदभावात्, इदं तु बोध्यम्, इदानीमिष्टसाधनतादिज्ञानं प्रवर्तकम्, तेन मातृपीवरान्ने बालस्य न प्रवृत्तिः, इदानीं कृतिसाध्यत्वाभावात्, तृप्तस्य च भोजने न प्रवृत्तिः, इदानीमिष्टसाधनत्वाभावादिति । उदयनाचार्यास्तु आप्ताभिप्रायो विध्यर्थः, पाकं कुर्यादित्यादावाज्ञादिरूपेच्छावाचित्वक्लृप्तस्याप्तेच्छावाचित्वे लाघवात्, एवं स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतयाप्तेष्ट इत्यर्थः, तथाप्तेष्टत्वेन स्वेष्टसा

धनत्वाद्यनुमाय तत्र प्रवर्तते प्रेक्षावान्, फलप्रमथनासौ तदभावान्न प्रवर्तते । यस्तु भेदे पौरुषत्वं नाभ्युपैति तं प्रति विधिरेव तावद् गर्भ इव कुमार्याः पुंयोगे मानमित्याहुः । वयं तु ब्रूमः—कार्यादिरूपनियोगस्येष्टसाधनत्वादेर्वा लिङर्थत्व-मित्यत्र नास्माकमेकान्तः शब्दशक्तेर्विचित्रत्वात् यथाव्युत्पत्ति जायमानस्य विचित्रबोधस्य च लाघवमात्रेणापह्नवनीयत्वात्, प्रवृत्तिहेतुता तदर्थज्ञानानां तद्विषयकवीर्यान्तरायकर्मक्षयोपशमजनकत्वेनैव प्रमिजनकत्वेनेव घटं प्रति दण्डस्यान्यं प्रतीत्यायन्यथासिद्धौ फलाननुगुणस्वरूपान्यविक्षेपप्रक्षेपसौम्येण प्रकृते तदभावात्, इत्थं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकेष्टत्वस्या प्रवृत्त्युपपत्तिः, विध्यर्थज्ञानेऽपि तत्रालस्यदोषप्रतिबन्धेन वीर्यान्तरायकर्मक्षयोपशमानिष्पत्तेः, इत्थमेव चाविरतसम्यग्दृष्ट्यादेः अक्ष्यविरत्यादौ प्रवृत्त्यभावोपपत्तिः, तत्र तस्य बलवदनिष्टहेतुताज्ञानेबलवत्त्वे चाऽभ्युपगम्यमान सम्यक्त्वक्षतिरेव, विपर्ययस्य मिथ्यात्वलक्षणत्वात्, अत एव भद्रास्तोः अक्ष्यविरत्याद्यभावोपपत्तये चारित्रमोहनीयं कर्म कल्प्यत इत्यन्यत्र विस्तरः। *नन्वेवं नियोगनिराकरणेऽपीत्यादिना नियोगस्य वाक्यार्थत्वं निराकृत्य भावनायास्तत्त्वसाधनायोद्यतं भाट्टं प्रति यदि विधिरेव वाक्यार्थोऽस्तु न भावनेत्यन्तरा वल्गतो वेदान्तिनो मतं सौगतनयाभयमेन दूषयति । †परमब्रह्मणो विधिरेवेत्यादि, अविकरणस्वरूपस्याभावस्येत्यर्थः, तस्य चेति स्वरूपविधेरित्यर्थः, सामान्यैकप्राप्यत्वादस्यान्यापोहवादे न विरोध इति भाव । ‡विधिवादिनोऽपीति, तत्रापि सदद्वैतेनातद्व्यावृत्तेरभावात्मिकाया अस्पर्शादित्यर्थः, §प्रतिभासमानाधिकरणत्वेनेति, भातीतिक्रियासमानाधिकरणत्वेनेत्यर्थ , तथा चाय प्रयोगः, अन्यापोहः प्रतिभासान्तः प्रविष्टः भातीतिक्रियासमा

पत्र १८ पृ १ पं ३। † पत्र १८ पृ २ पं १। ‡ पत्र १८ पृ २ पं ३। § पत्र १८ पृ २ पं ४।

नाधिकरणत्वात् मानस्वरूपवदिति, §परमब्रह्मत्वेनेति तथा चोपनिषद्वाक्यादेर्ब्रह्मत्वेन प्रतिभासात्मभेदो वाक्यत्वादिना च भेद इति रूपभेदाच्च विरोध इत्यर्थः। सम्यक्त्वसंवेद्यतान्यथानुपपत्तेरिति, प्रतिपादकादिभ्यो भिन्नस्य एव ह्युपनिषद्वाक्यस्य मकडेरुक्ता तथा भोत्रमन्य चेन तदाकारवृत्त्या संविषयता स्यात्, अन्यथा तु प्रातिभास्यत्वेन साधारम्येन प्रतिभासो न स्यादित्यर्थः। †प्रतिभास्यस्यापि सुप्रसिद्धत्वादिति, ननु प्रतिभास्यस्य सुप्रसिद्धतया न प्रतिभासाद्वैतबाधा प्रतिभास्यस्य प्रतिभासकत्वयेन साक्षिरूपतापन्निमिथ्यात्वेन प्रतिभासमात्रस्यैव सत्यत्वसिद्धेः, नहि मिथ्याहिः सुप्रसिद्धोऽपि सत्यरज्जुरूपाधिष्ठानं बाधत इति, दृश्यप्रतिभासोऽपि च बाधकविषयेन, यदा च विधिवदधीतवेदान्तस्यासम्भावनाविपरीतभावनास्य चित्तदोषरहितस्याध्यारोपापवादन्यायेनाचार्योपदेशसमनन्तरमेव तत्त्वमस्यादिवाक्यजन्यार्थं शुद्ध ब्रह्माऽस्मीत्यखण्डाकारामाधारकाररूपान्तःकरणवृत्तिरुदेति, शब्दजन्यज्ञानस्यापि विषयापरोक्षत्वेनापरोक्षत्वसम्भवात्, दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानवत्, ज्ञानस्य परोक्षापरोक्षत्वयोः करणभेदस्यानियामकत्वात्, एकस्मादेव मनसः सुखादिविषयापरोक्षज्ञानस्यातीतार्थस्मृतेः परोक्षायाश्चोत्पादात् तदा सा वृत्तिः स्वस्यकचैतन्यस्थाता मूलाज्ञानं बाधित्वा दग्धे वनानलवत् स्वयमुपशाम्यति, तदैव तत्प्रतिबिम्बितं चैतन्यमपि, केवलमक्षमात्रमवशिष्यते, दर्पणाभावे मुखस्येवोपाधिविलये उपहितस्य स्वरूपमात्रावस्थानस्वभावत्वादिति सिद्धं प्रतिभासाद्वैतं न व्यवहारदशायामनिर्वचनीयप्रतिभास्यघटादपि परमार्थदशायां तददृष्टेरिति चेत्, न, वाक्यार्थस्यापारमार्थिकत्वे तत्त्वमस्यादिवाक्यजन्यज्ञानविषयताया अपि ब्रह्मण्यसत्त्वेन तद्वाक्यज्ञाननिवर्त्यत्वायोगात्, ज्ञानाज्ञानयोः समानाश्रय

---

§ पत्र १८ पृ २ पं ११। पत्र १९ पृ १ पं १। † पत्र १९ पृ १ पं ११।

विषयकत्वेन नाश्यनाशकभावात्, किं चानिर्वचनीयानां घटादिपदार्थानामभ्युपगमापेक्षया सत्यत्वाभ्युपगम एव श्रेयान्, अन्यथा जाग्रत्स्वप्नयोर्विषयार्थमनिर्वचनीयविश्वस्यापि कल्पनापत्तेः प्रतिनियतकार्यकारणभावोच्छेदप्रसङ्गात्, किञ्च प्रतिभासाद्वैते बन्धमोक्षव्यवस्थैव दुर्घटा, निर्बीजकल्पनामूलानामज्ञानतत्कार्याणामसत्त्वात्, सत्त्वे वा तन्निवृत्तेः कर्तुमशक्यत्वात्, तन्निवृत्तेरसत्त्वे मुक्तेः स्वाप्निकप्रायत्वापत्तेः, सत्यत्वे द्वितीयसत्त्वेनाद्वैतव्याघातापत्ते, अनिर्वचनीयत्वे प्रपञ्चानुगमापत्तेः, सत्यासत्यानिर्वचनीयातिरिक्तप्रकाराभ्युपगमे च तस्य जात्यन्तरत्वे स्याद्वादाश्रयणापत्तेः, तेनैव च सर्वनिषेधेऽतत्कूटस्थस्यानावरणीयत्वात्, न च मायाधिकरणस्वरूपस्याज्ञाननिवृत्तेरदोषः, तस्य शाश्वतत्वेन संसारदशायां मुक्तस्यापत्तेः, न तत्कालोपलक्षितात्मनोऽपि परिणामित्वं विना मुक्तत्वं युक्तम्, उपलक्ष्यताया अपि कूटस्थेऽसम्भवादिति यत्किञ्चिदेतत्, तदिदमभिप्रेत्याहुः—सर्वतन्त्रप्रसिद्ध मुक्तिस्वरूपमनूद्य श्रीहरिभद्राचार्याः—

" परिणामिन्यात्मनि सति, तत्तत्त्वाभिनिवेश्यमेतदखिलं स्यात् । अर्थान्तरे च तत्त्वेऽविद्यायां यस्तु सत्येव ॥ १ ॥
पुण्याद्वैते तु यदा, भवति विशिष्टस्य बोधमात्रं वा । भवभवविगमविभेद—स्तदा कथं युज्यते मुख्यः ॥ २ ॥
अग्निजलभूमयो यद्, परितापकरा भवेऽनुभवसिद्धाः । रागादयश्च रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥ ३ ॥
परिकल्पिता यदि ततो, न सन्ति तत्त्वेन कथममी स्युरिति । परिकल्पिते च तत्त्वे, भवभवविगमौ कथं युक्तौ ॥ ४ ॥
परिकल्पनापि चैषा, हन्त विकल्पात्मिका न सम्भवति । तन्मात्र एव तत्त्वे यदि वा भावो न जात्वस्याः ॥५॥ " इति

पद्य २२ पृ १५७ ।

मधिकं मन्तृ मानेकान्तव्यवस्थायाम्, ' परव्याप्तृत्तिद्वारेण चेत्यादि,' ननु पुरोवर्तिनीष्टतावच्छेदकप्रकारकज्ञान त्वेनैव लाघवात् प्रवर्तकत्वा नत्वनिष्टतावच्छेदकाभावप्रकारकज्ञानत्वेन गौरवादिति विधेः प्राधान्ये विनिगमकमस्तीति चेत्, न, मतभृत्याद्यधिप्रकारकज्ञानादपि बहूनां प्रवृत्तेरवधृत्याद्यपि विध्यन्यतरनिष्ठप्रकारताविशेषस्यैव प्रवर्तकतावच्छेदकत्वौचित्यात्, अस्तु वा प्रत्याधाकारताविलक्षणरजताधाकारताशालिज्ञानत्वेन रजताधाकारप्रवृत्तौ हेतुत्वम्, रजताधाकारतैव चारजतभिन्नाधाकारता, तयदाकारतास्वभेदाय व्यवहारभेदः, वस्तुतो विधिज्ञानस्य प्रवर्तकत्वेऽपि निष्कम्पप्रवृत्त्यर्थमवधृत्याद्यपि विधिपत्वधौव्यम्, तत्संसर्गवत्वैव नियतत्वमन्यथेरिति नैकतरपक्षपातो युक्त इति दिक्। *विधात्रेवेति, एतेन "आहुर्विधातृ प्रत्यक्षं, न निषेद्धृ विपश्चितः। नैकत्वे आगमस्तेन, प्रत्यक्षेण प्रबाध्यते ॥१॥" इति मण्डनमिश्रोक्तमपास्तम्, वस्तुनो विधिनिषेधोभयांशसंवलितत्वेन विध्यंश इव निषेधांशेऽपि प्रत्यक्षव्यापारानुपरमात्। अथ निर्विकल्पकरूपमेव प्रत्यक्षप्रमाणं स्वीक्रियते न सविकल्पकम्, तस्य जात्यादियोजनात्मकत्वेन स्मृतिप्रायत्वात्, तच्च मावस्यैव भवति नाभावस्य, तस्य सविकल्पकैकवेद्यत्वस्वीकारादिति विधात्रेव प्रत्यक्षमिति वचनं नाचतुरस्रमिति चेत्, न, अभावः सविकल्पकैकवेद्य इति सिद्धान्तस्य निर्युक्तिकत्वात्, इन्द्रिय सन्निकर्षबलाज्जायमानस्याभावस्यापि निर्विकल्पकसिद्धेः, इन्द्रियसम्बद्धविशेषणतायाः प्रतियोगिविशेषिताभावप्रत्यक्षत्वमेव कार्यतावच्छेदकमित्यत्र मानाभावात्, अन्यथा सप्रकारकप्रत्यक्षस्यावच्छिन्न एव लौकिकप्रत्यासत्तिसम्बन्धेनेन्द्रियत्वेन हेतुतापत्त्या पुष्करत्वात्—भावानिर्विकल्पकस्याप्युच्छेदापत्तेः, नेत्याप्रकारकप्रत्यक्षकारणाय भवमदेतुतायां एव युक्तत्वमिति चेत्, न, न नेत्या-

पत्र २२ पृ १ पं ८।

कारकप्रत्यक्षवारणाय द्वितीयहेतुवाच्या एव युक्तत्वात्, किञ्चिद्वस्तीति प्रयोगाच्च नेतीष्टमेवेति चेत्, घन्यमिदं दृश्यत इति प्रयोगेऽप्यपि किं नेष्टम् ? भावत्वेनाखण्डोपाधिना भावस्येवाभावत्वेनाखण्डोपाधिनाऽभावस्यापि प्रत्यक्षोपगमे बाधकाभावात्, नञुल्लेखस्य तु प्रतियोगिवाचकपदनिपातत्वेनासार्वत्रिकत्वात्, अभावज्ञानस्य प्रतियोगिधीसापेक्षत्वात् घटत्वाद्यवच्छिन्नप्रकारतान्यप्रकारतानिरूपिताभावविषयताकप्रत्यक्षे घटादिधियो हेतुत्वाच्चाभावांशे निर्विकल्पकमभाव इत्याकारकप्रत्यक्षं च जायते इदृशप्रत्यक्षस्य निखिलप्रतियोगिज्ञानकार्यतावच्छेदकाक्रान्तत्वाच्चास्य चासम्भवादिति चेत्, न, तथाप्यभावस्वनिर्विकल्पकप्रत्यक्षस्य पदा, लाघवाय घटपटोभयाभावप्रत्यक्षनिर्वाहाय च घटादिधियो घटत्वाद्यवच्छिन्नप्रकारत्वनिरूपिताभावविषयताकप्रत्यक्ष एव हेतुत्वौचित्येन केवलाभावनिर्विकल्पकस्य वारयितुमशक्यत्वाच्च, यदि चाभावलौकिकप्रत्यक्षस्य घटत्वाद्यन्यतमविशिष्टविषयकत्वनियमाद्विशेषसामग्री विना सामान्यसामग्रीमात्रात् कार्यानुत्पत्तेर्नाभावनिर्विकल्पकं नेत्याकारकप्रत्यक्षं वा विशेषणमानादिरूपविशेषसामग्र्यभावादिति विभाव्यते, तदा द्रव्यलौकिकप्रत्यक्षस्यापि किञ्चिद्धर्मावच्छिन्नपर्यायविशिष्टविषयकत्वनियमादिरूपविशेषसामग्र्यभावादिति विभाव्यते, यदि च द्रव्यमपि निर्विकल्पकविषयत्वमेव तत्त्वमसीत्यादिवाक्यादपि अखण्डवस्तुमात्रस्य सविकल्पकैकवेद्यत्वमस्तु, यदि च द्रव्यमपि निर्विकल्पकविषयत्वमेव तत्त्वमसीत्यादिवाक्यादपि अखण्डवस्तुमात्रस्य सविकल्पकाशाब्दबोधोपपत्तिरिति विभाव्यते तदा द्रव्यार्थादेशात् सर्वत्र विशेषविनिर्मोकेण नयाऽऽत्मकमनेक पदार्थमदेव निर्विकल्पकशाब्दबोधोपपत्तिरिति विभाव्यते तदा द्रव्यार्थादेशात् सर्वत्र विशेषविनिर्मोकेण निर्विकल्पकपदशक्तिग्रहसम्भवात् सर्वस्यैव निर्विकल्पकैकवेद्यत्वमस्त्विति निर्विकल्पसविकल्पकतयाऽपि पदार्थानामनेकान्त एव श्रेयान्। तदुक्तं गुरुपद्म्यमाश्रित्य सम्मतौ–"सवियप्पणिव्वियप्पं, इय पुरिसं जो भणेज्ज अवियप्पं। सवियप्पमेव वा णिच्छएण च स णिच्छओ समए ॥ १ ॥" त्ति तथा च सर्वप्रमाणानां निर्विकल्पकादेशाद्विधारत्वं सविकल्पकादेशाच्च निषेद्धृत्वमिति

तुल्यौ विधिनिषेधाविति मन्तव्यम्, अभिक्रमेतवत्सं नयाद्युत्तरग्रन्थे प्रतिपादितमस्माभिरिति तत एवाधिकान्तव्यम्। नियागस्यैवेत्याधारभ्य भावनावाक्यार्थत्वसाधनोपक्रमो भाट्टस्य, †शब्दात्मेति, शब्दात्मभावनां शब्दनिष्ठप्रवर्तना लक्षणाम्, †अन्याम् आख्यातसामान्यार्थभिधाम्, †इय तु यच्छीत्यादौ दृश्यमाना भावना तु, †अन्यैव तत, †सर्वार्थ आख्यातसामान्यलक्षणया, अत एव †सर्वाख्यातेषु वर्तते वाचकत्वेन, ‡शब्देन हीति, तथा च फलान्वितधात्वर्थान्वितार्थ-भावनाजनकत्वं शब्दभावनात्वमित्यर्थः, §सन्मात्रमिति, अत्र स्थाने, अन्यत्र "सम्बन्धिभेदात् सत्तैव, भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां, सर्वे शब्दा व्यवस्थिताः॥१॥" इति कारिकाऽस्ति, तदर्थो गवादिशब्दानां महासत्तावाचित्वम्, गोत्वादस्तु प्रयोगोपाधितया लाभ इति। एवं च सर्वशब्दाविशेष इति प्रकृतकारिकया कारकासम्पृक्तस्य शुद्धस्य भावस्य धात्वर्थत्वं प्रतिज्ञायते, §तामिति, तां सत्ताम्, ¶महानात्मा [illegible], यां त्वतलादयो भावप्रत्यया आहुरिति, तेषां खलु सत्तासामान्यमर्थः, घटपटापुस्तकादीनां च प्रकृतिजन्यबोधप्रकारो धर्मो घटत्वादिः, न चैवं घटत्वत्वस्यापि वाच्यत्वापत्तौ गौरवम्, तत्तद्व्यक्तिविशिष्टमहासत्ताया एव घटत्वघटत्वत्वादिरूपत्वेनात्र लघुगुरुविचारानवकाशात्, अत एव वार्तिककारैस्तस्य भावस्त्वतलाविति सूत्रे यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलावित्युक्तम्, यस्य गुणस्य विशेषणस्य भावादाश्रयत्वात् द्रव्ये विशेष्ये शब्दनिवेशः शब्दप्रवृत्तिस्तस्मिन् वाच्ये त्वतलाविति तदर्थः, तथा च रूपादिशब्देभ्यो जातौ

---

पत्र २१ पृ १ पं १२। † पत्र ५१ पृ २ पं १। ‡ पत्र २१ पृ २ पं २। § पत्र २१ पृ २ पं ४।

प्रत्ययः, रूपादिशब्दानां जातिप्रकारकबोधजनकत्वात्, पचत्यादिशब्दानां क्रियाप्रकारकबोधजनकत्वेन तेभ्यः क्रियायाः सम्प्रत्ययः, संसर्गप्रकारकबोधजनकत्वमते च संसर्ग इत्यादिव्यवस्था सूपपादा, यद्वा " सर्वे भावाः स्वेनार्थेन भवन्ति स तेषां भाव " इति वार्त्तिके पक्षान्तरोक्तेः भवन्ति वाचकत्वेन प्रवर्त्तन्त इति भावाः स्वेन स्वरूपेणार्थेन भवन्ति प्रवर्त्तन्तेऽर्थाः स तेषां मर्थानां भावः प्रवृत्तिनिमित्तमिति तद्वाचकशब्दोऽपि त्वप्रत्ययार्थः, अर्थपरशब्दस्यापि प्रभवे प्रकारत्वात्, अघटार्थकघटपदादि पदं तु तत्तच्छब्दवाच्यत्वेनैव बोधस्य सर्वसिद्धत्वात्, घटपदत्वादिना शाब्दबोधस्योपपादयितुमशक्यत्वात्, अत एव घटपदादीनां घटपदत्वादिप्रकारकबोधाभावेन विशेषणज्ञानाभावात् घटपदत्वविशिष्टादौ शक्तिग्रहासम्भवेन पदजन्यघटपदत्वादिविशिष्टपदा र्थोपस्थितेरभावात्, प्रमेयपदानिरस्तुमपजन्ये संस्कार प्रमेयत्वाद्धि सोपदशायां घटपदत्वमात्रप्रकारकस्मृतिजनकोद्बोधकपदाद्घटत्व स्वप्रकारकस्मरणस्यापि घटोऽन्याप्रकारकतत्प्रकारकस्मरणे तादृशसंस्कारहेतुत्वावश्यकत्वेन वक्तुमशक्यत्वात्, अन्यथा जातित्वेन घटत्वप्रकारकसंस्कारादपि जातित्वाश्रि सोपदशायां घट इति स्मरणापत्तेः, न च प्रमेयाभाववदित्याकारकज्ञानात् संसर्गविधया घटपदघटत्वादिस्वरूपप्रतियोगित्वलक्षणसम्बन्धाविषयकात् ज्ञानलक्षणप्रत्यासत्तेः घटपदघटत्वादिप्रकारको मानसानुभवः सुलभ इत्यपि वक्तुं शक्यम्, सांसर्गिकज्ञानस्य सार्वदृश्यापत्तिभयेनोपनायकत्वानभ्युपगमात्, एतेन यत्र यत्र घटत्वादिसम्बन्धेन घटादिभ्रमो जातः तत्र तथाविधशक्तिग्रहोपपादनं सुकरमिति रघुदेवोक्तमप्यपास्तम्, तस्मादर्थपरशब्द स्यापि शक्यतावच्छेदकत्वं युक्तम्, घटादिपदस्यापि घटत्वादिकं घटादिपदं चेत्युभयं शक्यतावच्छेदकम्, तत्र जातिप्रकारकः शक्तिग्रहो विशिष्यापेक्षितः, पदप्रकारकस्तु तत्पदं स्ववाच्यकमिति सामान्यत एवेति विशिष्याग्रहीतशक्तिकेभ्यः किञ्च

दाब्दरेणैव शाब्दबोध इति सिद्धं । किं मेष्यत इति, ( २३ २ ११ ) आख्यातार्थतयेति शेषः, तथा च लिङादीति, अत्र क्रियामात्रमर्थभावना, लिङादिनिष्ठा प्रवर्तना तु किं कथं केनेत्यंशत्रयवती शब्दभावनेति विशेषः । तदुक्तम्, " लिङोऽभिधा सैव तु शब्दभावना, भाव्यं तु तस्याः पुरुषप्रवृत्तिः । सम्बन्धबोधः करणं तदीयं, प्ररोचना चाङ्गतयोपयुज्यते " ॥१॥ इति । ननु चेत्याचारम्य प्रभाकर इत्यन्तो ( २४ १ ७ ) पुरुषाकार एव नियोगो भावना वा लिङाद्यर्थो न तु भाव इति सौगतस्य पूर्वपक्षः, सोऽपि न परीक्षक इत्यादिना प्रत्यक्षवच्छब्दस्य मुख्यमर्थप्राहित्वं प्रवर्तकत्वं च, अन्यथा तस्यापि तथ स्याद्विकल्पेनान्यथासिद्धेः, भावीष्टसाधनताया मुग्रहत्वस्य चोभयत्र तुल्यत्वादित्यादिप्रतिबन्द्या तन्निरासः । भावना विशेषणत्वेनेति, ( २४ २ ७ ) तथा च भावनान्वययोग्ये कर्मत्वाधनवरुद्धप्रथमान्तपदोपस्थाप्ये लिङर्थसंख्यान्वय इति कर्तृमतमस्याभिधानानभिधानाभ्यामेवाभिहितानभिहिताधिकारीयव्यवस्थेति नानुपपत्तिरिति भावः । भावनैक्याद्द्विवचनबहुवचनाप्राप्तेर्यत्स्यमाणदोषस्याप्येतदेव समाधानं द्रष्टव्यम्, भावनान्वयिनो द्वित्वादिना द्विवचनाद्युपपत्तेः । तस्य कर्तृभेदाद् भेद इति, ( २५ २ ७ ) तस्य प्रत्ययार्थस्य स्वान्वययोग्यभेदाद् भिन्नसंख्यान्वितत्वदन्वयित्वमित्यर्थः । न कारकभेदाद् भेदीति, ( २६ १ १ ) न संख्याभेदाश्रयकारकान्वयित्वेन भिन्नस्वरूप इत्यर्थः । आख्यातार्थसंख्यान्वयिकारकस्याख्यातेनैव सर्वं भाव्यमत्वादिति भावः । तथा च चैत्रमैत्राभ्यामास्यत इत्यत्राख्यातार्थसंख्यायाः कारकानन्वितत्वाच्छाब्दन्यायेनौत्सर्गिकमेकवचनम्, धात्वर्थे त्वव्युत्पत्तेरेव न तदन्वयः, आर्थन्यायेन कथञ्चित् तदन्वयस्वीकारेऽपि सम्प्रदायविरुद्धत्वादेव न द्वित्वादिविषयया द्विवचनादिकमिति मन्तव्यम्, कारकद्वयमन्वयाद्रूपमेव द्वित्वादिकमाख्यातादि

गमनादिना नियोगे प्रतिपादय इत्यत्र प्रत्यक्षविद्धते सौगता स्याद्याकूत सम्पन्नाद् यदीत्याविना, (२६ १ २) सम्बन्धाद्
भिन्नकारकसम्बन्धाद्, तत्रैव क्रियाभेदः, धात्वर्थस्यापीति, (२६ १ २) चैत्रमैत्राभ्यामास्यत इत्यत्र कर्तृद्वयसम्बन्धेन
धात्वर्थेऽपि द्वित्वाद् द्विवचनापत्तिरिति भावः, स्वमते उपपत्तिमाह सौगतः, अस्माकं त्विति, (२६ १ २) भेदेन
हि विवक्ष्यत इति, (२६ १ २) कर्तृभिन्नत्वेन विवक्षिता सती कर्मभिन्नत्वेन विवक्षाभावीकृते कर्मभिन्नत्वेन विवक्षिता
न कर्तृभिन्नत्वेन विवक्षामिति कर्मकर्त्रभिधानानभिधाननियम इति भावः । पारमार्थिकस्योपपत्तेरिति, (२६ १ २)
तथा च भावनान्वयिनि सङ्ख्यान्वयादवभिधानानभिधानव्यवस्था पारमार्थिक्येव युक्ता, अन्यथोभयविवक्षानिमित्तस्य
युगपदेकत्वासम्भवेनौदनः पच्यते स्वयमेवेत्यादिकर्मकर्तृप्रयोगोच्छेदापत्ते, अतस्कर्मादिभेदविषया व्यवस्थोपपादने सकर्म
कार्मकप्रयोगादेरपि यादृच्छिकत्वापत्तेः । पारमार्थिके तु सकलस्वरूपेऽप्यर्थे नेच्छाधीनोऽयः, किन्त्वर्थप्रयोजनाधीनेच्छेति
न व्यवस्थाक्षतिरित्यादि द्रष्टव्यम् । स्याद्याकूत ते (२८ १ २) इत्याद्यारभ्य प्रभाकरमतम्, ननुसामान्यप्रत्यक्षावि
स्यादि (२८ १ ८) संशयकारणोपपादनं भाट्टस्य तदसहमानस्य, न त्वनुपलम्भाद् (२८ १ ०) इत्यादिरुक्तिः
प्राभाकरस्य, अभाव एवेति, (२८ १ ९) अभावप्रमाणजन्या प्रमेयत्यर्थः, सामान्येनेति, (२८ १ ९) योग्या
योग्यानुपलम्भादिकल्पप्रयोदासीन्येनानुपलम्भमात्रं प्रमाणमिति वादिन इत्यर्थः । तथानुपलब्धेरेव, (२८ १ १०)
अनुपलब्धिलक्षणप्राप्तानुपलब्धेरेव, पिशाचादीनामिव संशयो भवत्वित्यर्थः, न स्यादिति अभावनिश्चयकारिणीति शेषः,
स्यात् संशय इति (२८ १ १०) नियतसामग्र्यभावेन सम्भूतसामग्रीकत्वादित्यर्थः, सामान्यप्रत्यक्षतायामिति

(२८ । १२) तद्भिन्नतया विशेषस्यापि प्रत्यक्षसिद्धत्वादितिभावः । 'युक्तस्तत्र सन्देह इति' (२९ । ८) उत्कमीरया सामान्यप्रत्यक्षात् विशेषाप्रत्यक्षादनेकविशेषस्मरणाच्च संशय इति प्रागुक्तार्थस्य निर्व्यूढत्वादिति भावः । अत्र सामान्यप्रत्यक्षं धर्मिज्ञानविधया विशेषाप्रत्यक्षं विशेषादर्शनविधयाऽनेकविशेषस्मरणं च कोटिद्वयोपस्थितिविधया संशयकारणमिति मन्तव्यम् । ननु कोट्योर्विरोधज्ञानमपि संशयकारणमस्ति तत्कुतो नोत्कीर्तितमिति चेत्, सत्यम्, संशये तदभिन्नाभावविषयकत्वरूपो विरोधो न प्रकारस्तथा सति तस्य तदभावव्याप्तिपर्यवसायित्वेन तदभावव्याप्यवत्ताज्ञानविधया संशयप्रतिबन्धकत्वात्तदभावस्य च कार्यसहभावेन हेतुत्वात् संशयमात्रस्य दुर्लभत्वापत्तेः, न च तदभावव्याप्यवत्तानिश्चयत्वं तदभावाऽप्रकारकत्वघटितम्, गौरवात्, अन्यथा वह्न्यभावव्याप्यव्याप्यवान् वह्निव्याप्यवान् पर्वत इति परामर्शात् पर्वतो वह्निमान् तदभावव्याप्यवांश्चेति संशयरूपाया अनुमितेर्दुर्वारत्वापत्तेः, किन्त्वेकविरोधः संशये संसर्गतया भासते, तस्य च पूर्वमुपस्थितिर्नापेक्षितेति विरोधज्ञानस्य संशयहेतुत्वोत्कीर्तनायोगात् । किञ्च विरोधाविषयकैकधर्मिकस्यापि स्वतदभावप्रकारकज्ञानेऽपि संशयत्वव्यवहारात् अन्यथा तस्य संशयान्यत्वे ततो नियमकार्यापत्तेः, संशये न विरोधविषयकत्व-स्पर्शोऽपीत्यलं तत्र तज्ज्ञानहेतुत्वकल्पना । एतेन तद्व्याप्यत्वप्रतिबन्धकताविषयस्वरूपस्य विरोधस्यापि प्रकारतया संसर्गतया च संशये भानमपास्तम् । अपास्तं च तद्व्याप्तिबुद्धिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वमेकं तदभावव्याप्तिप्रकारता-निरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिर्णयविशिष्टतद्धर्मावच्छिन्नप्रकारताशालिनिर्णयत्वेन प्रत्यक्षव्याप्त्यं कल्पयित्वा

पुरुषत्वव्याप्यवानयमिति ज्ञानादपि पुरुषत्वसन्देहनिवृत्तेः, एवं च संशये कोटिद्वये विरुद्धत्वं कोटितावच्छेदकयोरेकत्र द्वयमिति रीत्या मानोपगमाच्चस्योपदर्शितप्रतिबध्यकतावच्छेदकतया चतुरानाक्रान्तत्वेनानुपपत्तेरभाव इति रघुदेवोक्तमपि, तदभावव्याप्यतिरिक्तनिष्ठप्रकारतानिरूपितत्वापत्त्या तदभावव्याप्तिनिष्ठप्रकारतानिरूपितत्वनिवेश एव लाघवाच्च, अन्यथैकत्र द्वयमिति रीत्या तदभावव्याप्तिकरत्वावगाहिनो विशेषदर्शनस्य समूहालम्बनप्रतिबन्धकत्वानुपपत्तेरिति दिक् । अयं स्थाणुर्वा पुरुषो वा । इत्यत्रापि स्थाणुत्वतदभावपुरुषत्वतदभावरूपकोटिचतुष्टयभास्वैव संशय स्वीक्रियते तादृशवाक्यादिव पदाद्धर्मिणः स्थाणुपुरुषपदाभ्यां स्थाणुत्वपुरुषत्वयोर्वाकारद्वयेन चाभावद्वयस्योपस्थितेः, केवलं स नव्यमते ग्राह्यः, जीर्णनैयायिकमते चोपनयसहकारेण मानस इति विशेष इति नानुपपत्तिः, अन्य त्वेकधर्मिणि विरुद्धनानाधर्मप्रकारकज्ञानं संशय इति संशयलक्षणं ध्रुवत, तन्मते स्थाणुर्वा पुरुषो वेत्येवं द्विकोटिक एव संशय, विरोधज्ञानं च तन्मते संशयकारणमिति मन्तव्यम्, तल्लक्षणा धर्मैकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छेदेन विरुद्धत्वेन नानाधर्मप्रकारकत्वम्, तेन द्रव्यघटौ घटतदभाववन्तौ विस्यादेः इत्यादिव स्वतन्त्रद्वयवत्त्वादेर्घटो द्रव्यं पृथिवी चेत्यादेश्च निरासः, एकधर्मिकविरुद्धनानाप्रकारकज्ञानस्वरूपं कोटिद्वयविरोधमानसामग्रीसमाजाधीन संशयत्वं नीलघटत्वस्य कार्यतावच्छेदकम्, एवं संशयत्वशून्यज्ञानस्वरूपनिश्चयत्वमपि नीलत्वशून्यघटत्ववदेव दीधितिकृतः, न चैवं धर्मिज्ञानमन्तरेण निश्चयवत् संशयोऽपि स्यादिति वाच्यम्, सति धर्मीन्द्रियसन्निकर्षे इष्टत्वात्, क्वचिद्धर्मिज्ञानस्य धर्मीन्द्रियसन्निकर्षविघटकतयैवोपयोगात्, कोटिद्वयोपस्थितेरपि विशेषणज्ञानमुद्रया विशिष्टबुद्धित्वावच्छिन्न एवापेक्षा, विशेषणज्ञानाद्यतिरेके तु तत्कोटीन्द्रियसन्निकर्ष एवापेक्षितो, नतु

मवत्र तज्ज्ञानमपि, संशयोत्पत्तिसमये निश्चयापत्तिरपि निश्चयत्वस्य कार्यतानवच्छेदकत्वेन तदवच्छिन्नोत्पत्तेरापादयितुमश-क्यत्वादेव न भवतीति तदाशयः, अस्मत्सिद्धान्ते तु तादृशमपि संशयत्वं निश्चयत्वं च विजातीयविजातीयक्षयोपशमज-न्यतावच्छेदकमवश्य स्वीकर्तव्यम्, चतुर्विधात्वत्र निमित्तानिमित्तयोरपि पाठात् मत्यादिमदानां च कारणमेदप्रतिनिय-तानामेव परिगणनात्, अन्यथाऽसंख्यमेवापत्तं, अर्थसमाजग्रस्तस्य च धर्मस्य कार्यतानवच्छेदकत्वे प्रमाणाभाव एव चैत्र परैरपि स्वीक्रियते, अन्यथा स्वसमानाधिकरण्यघटितकविशेषणतोभयसम्बन्धावच्छिन्नघटितनिष्ठप्रतियोगिताकध्वं-स्ताकभेदवद्घटितत्वमपि तज्ज्ञानकार्यतावच्छेदकं न स्यात्, तच तत्र तथाविधकार्यकारणभावग्राहकस्य तमवेत्यादि-वेदान्तेरिवात्र चक्षुरादिविषयस्य प्रमाणस्य सत्त्वाभावस्यैवेति तादृशस्यापि संशयत्वादेः कार्यतावच्छेदकत्वं निराबाधमिति। यदि च निश्चयसंशययोरवधारणत्वानवधारणत्वे विषयते अनुभवसिद्धे तदा तयोरेव कार्यतावच्छेदकत्वमिति युक्तमुत्पश्यामः। 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' इति गौतमीयं सूत्रम्, समानो-ऽनेकयोः तत्कोटिद्वयमात्रकोटिमतां यो धर्मस्तदुपपत्तेर्धर्मिणि तद्ज्ञानात्, विप्रतिपत्तिर्विरुद्धकोटिद्वयप्रतिपादकवाक्यं शब्दो नित्यो न वेत्यादिवाक्यात्, उपलब्धिरनुपलब्धिश्च उभयथा दृष्टयोः भावाभावयोः तयोरव्यवस्थाऽनियामकं सपक्षविपक्षाभ्यामुभयधर्मवत्ता-ज्ञानं यतोऽसाधारणधर्मवद्धर्मिज्ञानादिति यावत्, विशिष्यते व्यावर्त्यते विशेषदर्शनविषयो यस्मात् स विशेषो विशेषादर्शनं तद-पेक्ष इति, एतावता कारणसूत्रं, लक्षणमाह—' विमर्शः इति ' एकधर्मिकविरुद्धोभयप्रकारकं ज्ञानमिति तदर्थः, भाष्यकारस्तु समानः कोटिद्वयसहचरितो धर्मः, अनेकधर्मोऽसाधारणधर्मः, उपलब्ध्यनुपलब्ध्यव्यवस्था तत्कोटिकज्ञानस्य तदभावकोटिक-

ज्ञानस्य च मद्विषयकत्वानवधारणे प्रामाण्यसंशय इति यावदित्याह, तदिह करोत्यर्थभावनारूपधर्मिज्ञानाद्विशेषादर्शनात् यज्यर्थ तदितरकोटिद्वयोपस्थितेश्च विशेषसंशयाद् युक्तो विशेषप्रश्न इति बोध्यम् । तत्र स्वलक्षणेषु, विज्ञानवादिमतमापातमिति, (२९ २ १) तथापि सौगतपक्षो न क्षीयत इति भावः । परमार्थसदायातमिति, (२९ २ २) अनिच्छतोऽपि योगाचारस्येति शेषः, विकल्पमुखे प्रतिभासमानस्य सामान्याकारस्य मुख्यतायाः स्वयमेवाभ्युपगमाच्च ज्ञानसामग्री-मात्रप्रभवस्य निर्विकल्पकेऽपि युक्तत्वाद्विशेषरूपताया अपि च बहिरर्थे गोत्वे च ज्ञानमात्र एव तत्त्वतो विश्रान्तत्वादिति हृदयम् । विपर्ययस्यापीति, (२९ २ ४) अनुभूयमानेऽनुगतव्यावृत्ताकारद्वयेऽन्यतरासत्त्वे विनिगमकाभावादिति निष्कर्षः । विचार्यमाणायोगादिति (२९ २ ७) किं स्यात् सा चित्रैकस्यामित्यादियुक्तेरिति भावः । एतेन वादान्तरवादिनां सर्वेषां सामान्यविशेषात्मकतासाधनेन, भेदाप्रतिष्ठितेः विज्ञानागोचरत्वात् । भेदमात्रस्येति, (२९ २ १४) अनुवृत्तरूपावगाहिनि ज्ञानेऽन्ततस्तदाश्रयतयैव भेदावगाहनादिति भाव । सामान्यग्रहण एवानुमानव्यापारो व्यक्तिस्त्वाक्षेपतो लभ्यत इति तु न वक्तुं युक्तम्, आक्षेपस्याप्यनुमानत्वात्, अनुमितौ सामान्यविषयताप्रवादस्तु व्यापकतानवच्छेदकतद्व्यक्तित्वरूपेण व्यापकानवगाहित्वात् मत्पक्षधर्मविरुपतास्यविषयिताभावाद्वा समर्थनीयः । ताभ्यामिति, (३० २ ४) ताभ्यां स्थाणुपुरुषाभ्यां विशेषाभ्यां, तस्योर्ध्वतासामान्यस्य, व्यतिरेके भेदे स्वत्, किं न दूरे व्यक्तिमानप्रतिपत्तकदूरत्वसति देशेऽवभासनं स्यादेव, विशेषात् सामान्यस्य भेदे एकभासकसामग्यभावेऽपरतद्भावस्य नियन्तुमशक्यत्वादिति भावः । इष्टापत्ताव्याह—दूरेऽवभासमानस्यास्पष्टाकारस्य सामान्यस्य मध्यपानप्रतिक्षयेन भासन स्यात् । यद्दूरेऽस्पष्टमनुभूयते तत्समीपेऽप्यस्पष्टं

मावात् असस्ट विशेषस्यास्पसस्टताया एव सम्भवादिति भावः। निरवच्छिन्नप्रस्वादिप्रकारतावाल्पाप्राविप्रसक्ते निष्कटवे प्रशपितावर्हेतुत्वं दृढप्रपितावर्मा प्रतिबन्धकत्वं कल्प्यते, अस्तु वा सामान्यविशेषसाधारण्येनासस्टतास्यविषयताविशेषसम्बन्धेन मावात्कारस्यावच्छिन्न दृढत्वस्य स्पष्टास्पविषयताविशेषसम्बन्धेन तदवच्छिन्ने च सभिधानस्य हेतुत्वम्, तत्तदेशस्थिरविशिष्टविषयस्य तात्पर्येणैव वा तत्वमिति नोक्तदोषस्पर्श इत्यभिप्रायवान् समाधत्ते—एतदप्ययुक्त विशेषेऽपि समानस्याविस्यातिना ( ३० २ ५ )। कुतश्चिद् दृष्टेत्यादि, ( ३० २. १४ ) दृष्टं कारणं दृढत्वादि मध्यमसस्टतयो पक्षमः न चैवं व्यभिचारः, दृढत्वादिदोषस्यसेऽप्यसस्टत्वोपक्षमस्यैवाभ्युपगमात्, तस्मावच्छिन्ने च तवद्व्यपक्षेत्रकाल मावानामेकव्यतिक्रमत्वेन हेतुत्वे दोषाभावादिति दिक्। सवाधकस्यादिति ( ३१ १ २ ) सवाधकत्वस्य च सप्रतिपक्षत्वेन व्याप्तत्वादिति भावः। 'तथा च कथमिदमवतिष्ठत इत्यादि ( ३२ ७ १२ ) यदि च विधिनिमन्त्रणामन्त्रणाध्येषणचतुष्टयसाधारणी प्रवर्तनैव शब्दभावना, विधिः प्रेरण भृत्यस्य निकृष्टादेः, निमन्त्रणमावश्यकप्रेरणा, आमन्त्रणं कामचारानुज्ञा, अध्येषणा सत्कारपूर्वो व्यापारः, एतच्चतुष्टयानुगतप्रवर्तनात्वस्य शक्यतावच्छेदकत्वे लाघवात्, आह च "अस्ति प्रवर्तनारूप-मनुस्यूतं चतुर्ष्वपि। तत्रैव लिङ् विधातव्यः, किं भेदस्य विवक्षया ॥१॥ न्यायव्युत्पादनाय वा, प्रपञ्चार्थमथापि वा ॥ विध्यादीनामुपादानं, चतुर्णामादितः कृतम् ॥ २ ॥" इति, प्रवर्तना च प्रवृत्तिजनकज्ञानविषयतावच्छेदको धर्मः, स चेष्टसाधनत्वादिरिति विभाव्यते—तथा नामान्तरेण शिष्यबुद्ध्या व्युत्पादनाद्भूत न कश्चिदन्यो नैयायिकमताद्विशेष इति मन्तव्यम्। परापेक्षामन्तरेण क्वचित् कथाप्रियत्वाभावादिति, ( ३५ २ १ ) अत्र तस्येति योजनीयम्। तस्य

समानप्रत्ययप्रत्ययः। नन्विदमयुक्तम्, घटोऽयमित्यादौ घटत्वादिसमानपरिणामप्रत्यक्षस्य परापेक्षामन्तरेणैव सर्वानुभवसिद्धत्वात्, न च सामान्यप्रकारकप्रत्यये परापेक्षत्वनियमोऽपि वक्तुं युक्तः, घटत्वं सामान्यमिति प्रतीतेरतथात्वादिति चेत्, सत्यम् सामान्यीयविशेषणतासम्बन्धेन सामान्यप्रकारकप्रत्यये तथा नियमे दोषाभावात्, घटत्वं सामान्यमित्यत्र तु सामान्यस्य तादात्म्येनैव प्रकारत्वात्, वैसादृश्येऽपीत्थमेव परापेक्षत्वनियमोपपत्तेः, परापेक्षस्यापि कथञ्चिदनपेक्षत्वं तु न दूषणम्, किन्तु स्याद्वादसाधकत्वात् भूषणमेव, एतेन सामान्यबोधो न परापेक्षो न वा वैसादृश्यबोधः, किन्तु तद् व्यवहार इत्ययमपि नयोऽनुगृहीतो भवतीत्यादि विभावनीयं सुधीभिः।

कथं शबल इत्यस्यापि, (३४ २ ३) शबलेन समानो धवल इति प्रत्यये सामान्यपदार्थस्य तद्भिन्नत्वे सति तद्वृत्तिधर्मस्वरूपत्वेन भेदगर्भत्वात् भेदप्रत्ययस्य चाभेदज्ञानविरोधित्वादिति भावः। एकस्योपचारादिति, उपचरितमेकत्वं तज्जातीयाभेदरूपमाश्रित्येत्यर्थः। तद्व्यक्तित्वावच्छिन्नभेदबाधबुद्धिर्हि तद्व्यक्तित्वावच्छिन्नभेदाभाववत्ताबुद्धिं विरुणद्धि न तु तज्जातित्वावच्छिन्नभेदाभाववत्ताबुद्धिमित्येव न विरोध इत्यर्थः। न चैवं गौः कोविदजातिमानित्यादावतिप्रसङ्गो, विशेष्यतावच्छेदकपदवाच्यतावच्छेदकजातित्वावच्छिन्नभेदाभावाभप्रायेणानतिप्रसङ्गात्, यद्वैकत्वस्य शबलधवलवृत्तिसमानपरिणामगताभेदस्योपचारे धर्मिण्यध्यारोपमाश्रित्येत्यर्थः। न चैवमत्रापि सादृश्यान्तरमादायातिप्रसङ्गः, 'आरोपे सती'त्यादिन्यायेन सादृश्यान्तरेणाभेदाध्यारोपायोगादिति मन्तव्यम्। मुख्यमात्माधिकृत्य इति, (३४ २ ४) मुख्यं स्कन्धपरिणामकृतमेकत्वमात्मादिष्वभ्युपगन्तव्यमित्यर्थः। सादृश्यं तूपचरितमिति (३४ २ ४) प्रथमपक्षे सादृश्यप्रत्ययस्य सादृश्यानिमित्तमित्यर्थः। द्वितीयपक्षे

सारूप्यमित्यर्थः। कथमुपपद्येतेति, (३४ २ ५) मुख्यैकत्वस्य परानपेक्षत्वात् स एवायं गौरित्यत्र तदाश्रयणे शबलेन समानो धवल इति प्रत्ययो नोपपद्येतैवेत्यर्थः। तयोरेकसामान्ययोगादिति, (३४ २ ५) एतदनन्तरं तेन समानो ऽयमिति प्रत्यय उपपद्येतैवेत्यनुषञ्जनीयम्, तयोः शबलधवलयोर्गोत्वरूपैकसामान्यसम्बन्धे धवले शबलभिन्नत्वशबलवृत्तिगो-त्वसामान्यरूपधर्मप्रहे उक्तविशिष्टबुद्धेर्नानुपपत्तिरित्यर्थः। इत्थं तटस्थेनाक्षेपसमाधाने कृते वादिप्रसङ्गमाह–इति चेदि त्यादिना, (३४ २ ५) सामान्यवन्ताविति (३४ २ ५) मुख्यैकत्वरूपे द्वित्वत्वेनाभिव्यञ्जकापेक्षाधीसत्त्वे सम् दालम्बनस्यैव सम्मुखसामग्रीकत्वादित्यर्थः। न चैवं घटवद्भूतलमित्यत्रापि सयुक्ते घटभूतले इत्यस्यापत्तिरिति वाच्यम्, तत्रापि घटवत्त्वसारूप्यरूपैकस्यानाश्रयतो तदापत्तेरिष्टत्वात्, तदाश्रयणे तु धर्मिगतसङ्ख्यापुरस्कारेणैव तदन्यविषयाधी नवोपपद्येतेति ध्येयम्। नन्वेवमेकत्वाश्रयणेऽपि स एवायं गौरिति धीकाले तेन समानोऽयमिति कथं न स्यात्, तत्राह भवेदोपचारे त्विति (३४ २ ६) सामान्यमिति सम्प्रत्ययः स्यादिति (३४ २ ६) सामान्यान्तर्निगिरणं कृत्वा तदेकत्वप्रत्ययः स्यादित्यर्थः। न तेन समानोऽयमिति (३४ २ ६) तत्समानत्वबुद्धेस्तदेकत्वबुद्धिजनन एवोपधीमत्त्वादिति भावः। सत्यगवयेऽपि, (३४ २ ८) तथा च मावस्थापनादिगोव्यवहारहेतुसारूप्यरूपाणां गोत्वानां भिन्नत्वाभ्युपगमाच्च दोषः। एकत्वव्यवहारश्च तेषु गोत्वत्वेनानुगमव्यैवोपपादनीयः। अत एव मुख्यस्यापत्त्यादिना सांकर्यात् इत्यकारस्वर्णकारवर्णतुलादिवन्यतावच्छेदकतया घटत्वमपि नानैवैकत्वव्यवहारश्च तत्र कथञ्चित्सौसारूप्यादिनेति परेऽपि स्वीकुर्वते। तदेकजातित्वनियन्धनमिति (३४ २ १०) तेन मातृगमादिनैका मातिर्यस्य स्थापनागमादेस्त

चप्रयोजकमिदपर्थः । तथा च गोपदप्रवृत्त्यवच्छेदकं निक्षेपचतुष्टयानुगतगोत्वमेव तद्व्याप्यानि च भावगोत्वादीनि नानेति निष्कर्षः । इदं तु बोध्यम्, एकानेकत्वेनानुभूयमाने वस्तुनि य एवांश एकत्वावच्छेदकः स एव द्रव्यं य एव चानेकत्वावच्छेदकः स एव पर्याय इति द्रव्यार्थिकनयेनोर्ध्वतासामान्यस्येव, तिर्यक्सामान्यस्याप्येकत्वस्याविशेषेण ग्रहणात् कथं वाच्यो युक्तिरात्मादिद्रव्य मुख्यमेकत्वं सामान्ये तूपचरितमिति, विपर्ययस्यापि वक्तुं शक्यत्वात्, आत्मादिद्रव्यस्याप्येकग्रहणगृहीतासंख्येयप्रदेशाधारमकत्वस्य सिद्धान्तसिद्धत्वात्, सामान्यस्य व्यञ्जनपर्यायरूपत्वाच्च मुख्यमेकत्वमिति चेत्, एवं सति सर्वत्र शब्दानुगम एव स्यादर्थानुगमः, तथा चानुभूयमानार्थानुगताकारानुपपत्तिः । किञ्चैवमृजुसूत्रनयेनात्मादिरपि प्रतिक्षणभङ्गुरार्थपर्यायात्मा कथं मुख्यैकत्वमभजीत, नयान्तरेण तु मुख्यमेकत्वमुभयत्राविशिष्टम्, अस्खलितप्रतीतेरेव तत्र मानत्वात्, अनुगतप्रतीतिविषयो हि सामान्यं व्यावृत्तिप्रत्ययविषयश्च विशेष इति, अनुगतप्रत्ययोऽपि चोर्ध्वतासामान्यानालम्बनस्तिर्यक्सामान्यमेवालम्बते, विषये चैव धियां विशेष इति न्यायात्, अन्यथा साकारवादापातात्, स्वरूपास्थित्वमन्यदवसत्त्वं न सहत इति चेत्, अन्यकालस्पर्शमपि कथ महतामिति स्मरन्तु देवानुप्रियाः, सौत्रान्तिकविशिष्टान्तपदतेः स्वतो व्यावृत्तिमतां पदार्थानां कथञ्चिदनुगतधीजननैकशक्तिर्ज्वरहरणैकशक्तिरिव गुडूच्यादीनां सामान्यमिति मते तु तुल्यन्यायेन विशेषस्यापि व्यावृत्तिधीजननशक्तिरूपत्वेन तदुभयाप्रत्यक्षत्वप्रसङ्गः, तदतिरिक्तद्रव्याभावेन द्रव्यार्थतया प्रत्यक्षत्वस्यापि वक्तुमशक्यत्वात् । तस्मादेकत्वमनेकत्वं च सामान्यविशेषयोर्द्रव्यपर्यायपर्यवसितं स्वस्वग्राहकनयापेक्षया मुख्यमेवेति दिक् । येन सदपि वाक्यार्थो न स्यादिति, (३४ २ १३) ननु पञ्चादिसामान्यस्य शब्दार्थता कथं न घटयामः, किन्तु घटधर्मत्वेनान्यलभ्यतया लिङ्गधर्मतामेव, अत एव धर्मिकल्पनात इति न्यायाद

पूर्वकल्पनापेक्षया यागादेः फलकालपर्यन्तं स्थायित्वमेव युक्तं, यागोत्तरकाले इदानीं न यजेयमिति प्रतीतेर्व्यापारकालावच्छिन्न समवेतत्वस्यैव यागादिप्रत्ययहेतुत्वकल्पनेनोपपत्तेरित्युक्तिरपि प्रत्युक्ता, यत्नाद्यर्थस्य लिङर्थव्यापारेऽन्वितस्यैवानुभवाद्वाच्यायां भावनायां अप्रतिक्षेपात्। न च सर्वत्र व्यापाररूपा भावना नाख्यातस्यार्थः, किन्तु धातोरेवेति वैयाकरणमतमयुक्तं, प्राधान्येन प्रतीयमानव्यापारस्य धात्वर्थतायाः प्रकृतिप्रत्ययोः प्रत्ययार्थप्राधान्यमिति न्यायविरुद्धत्वादिति चेत्, "अत्रा युक्त्याद्युक्तयोष्ठन्तो, नवीनवैयाकरणाः सयुक्तीः। धन्यार्थमुग्धौ वयमेव दक्षा इत्यान्तरं दर्पमितोऽपिरन्तः ॥ १ ॥" यच्चावदुक्तं 'प्रकृतिप्रत्ययौ' रित्यादिन्यायात् व्यापारो न धात्वर्थ इति तदयुक्तं, तस्य न्यायस्य प्रकृत्यर्थप्रकारकबोधे तदुत्तरप्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावमूलत्वात्, स एव च न सम्भवति, पक्वानित्यत्र पाकं कृतवानिति विवरणात्, पाकस्य कर्मकारकस्य क्तवतुप्रत्ययार्थे कर्तृकारकेऽन्वयात्। न च "सम्बन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः। तदेकांशनिबद्धे तु व्यापारोऽस्या न विद्यते ॥१॥" इति भट्टपादोक्तरीत्या सम्बन्धसामान्येन कारकाणामन्वयो भवतु इत्यतः, क्रियात्वस्यैव कारकान्वयितावच्छेदकत्वेनान्यप्रयोजकरूपपत्त्वलक्षणयोग्यताविरहात्, तस्मात् क्रियारूपा भावना धात्वर्थ एव, 'भूवादयो धातवः' इति सूत्रे भूप्रभृतिप्रकारवाचकादिशब्दग्रहणं इन्द्रमर्मयदुमीरिणा भूप्रभृतयो वाचकाश्च धातव इत्यर्थलाभात्, क्रियावाचकत्वे सति भ्वादिगणपठितत्वस्यैव धातुलक्षणस्य पर्यवसानात्, अत्र क्रियावाचके हिक्रुपगन्नानेत्यादावतिव्याप्ति-वारणाय विशेष्यं, वा इत्यसत्त्वस्य अतिव्याप्तिवारणाय विशेषणं, वा इत्यस्य चादिस्याप्यगणे पाठस्तावत्तस्यैव भ्वादिगणेऽपि पाठात्, न "च यतिगन्नाद्यर्थनिर्देशो नियामकस्तस्यार्थानादेशनादिति" भाष्यपर्यालोचनया धातूनामनेकार्थत्वेन नियमस्या

पुनिरुक्तत्वलाभात्, क्रियात्वं च व्यापारत्वं, न तु धात्वर्थत्वम्, अन्योन्याश्रयात्, न चान्यतमत्वं धातुत्वं, भूवादय इति सूत्रवैयर्थ्यापत्तेः, न च सनादीन् कण्ड्वादीनन्यतमत्वेनादाय वाचकत्वे सति गणपठितत्वमेव धातुत्वमिति वाच्यम्, तदन्यतममध्ये विकल्पस्यापि विकल्पयतीति प्रयोगानुसारेण प्रवेशौचित्यात् तदर्थकचकारे 'विभाषेति' गौरवम्, क्रियावाचकत्व एव हि धातोः अग्निष्टोमयाजीत्यादौ कर्मणि करणोपपदे कर्तरि च ण्यत् णिनिप्रत्ययोपपत्तिः, विना क्रियां कारकस्यासम्भवेन तद्वाचकप्रत्ययस्याप्यसम्भवात्। न च गम्यमानक्रियामादाय कारकयोगइति मञ्जूषीतिर्युक्ता, आख्यातस्थलेऽपि तदापत्तौ भावनायास्तदर्थत्वप्रवादस्य वचनलाघवलितत्वप्रसङ्गात्, एतेन प्रकृते लिङ्गसङ्ख्यान्वयानुरोधात् कर्तृपर्यन्तस्यौचित्यात् तेनाक्षेपाद्भावनाप्रत्ययः सुघट इत्यपास्तम्। एवं सत्याख्यातेऽपि संख्यान्वयानुरोधेन कर्तृपर्यन्तत्वप्रसङ्गात्, किञ्चैवं नखैर्भिन्नो नखभिन्नो हरिणा त्रातो हरित्रात इत्यादौ "कर्तृकरणे कृता बहुलमिति" समासो न स्यात्, पुत्रो राज्ञो, भार्या देवदत्तस्येत्यादाविवासामर्थ्यात्, न च दध्योदनो गुडधाना इत्यादाविवात्राप्याक्षिप्तक्रियाद्वारा सामर्थ्यं वाच्यम्, तत्र विध्यानर्थक्यादगत्या तथा स्वीकारेऽपि नखभिन्न इत्यादौ साक्षात्तदर्थान्वये बाधकाभावात्। किञ्च भावनायास्तिङर्थत्वे भावयति घटमिति वद्भवति घटमित्यपि स्यात् धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात्, न चाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वाच्छक्त्या कर्मसंज्ञाया बाधात् द्वितीयेति वाच्यम्, आख्यातार्थव्यापाराश्रयत्वस्य कर्तृस्वरूपत्वे पाचयति देवदत्तो विष्णुमित्रेणेत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ तृतीयानापत्तेर्ग्रामं गमयति देवदत्तो विष्णुमित्रमित्यत्र विष्णुमित्रस्याकर्तृतापत्तौ ग्रामस्य गमिकर्मतानापत्तेश्च। तथा च ग्रामाय गमयति देवदत्तो विष्णुमित्रमित्यपि न स्यात्, "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीति," गत्यर्थकर्मण्येव चतुर्थीति

धानात्, अपि च फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवानिति प्रतीत्यापत्तिः संयोगाश्रयत्वात्, फलानुत्पाददशायां व्यापार सत्त्वे पाके भवतीत्यनापत्तिर्व्यापारविरमे पाको विगत इत्यापत्तिश्च, न च भावप्रत्ययस्य घञादेरनुकूलव्यापारबोधकत्वाभा दुपपत्तिः कर्तरि कृदित्यत एव तदभावे विशिष्टानुशासनवैयर्थ्यापत्तेः । अथ कथं फलव्यापारयोर्द्वयोरपि धातुतो लाभ इति चेत्, फले व्यापारे च समुदायशक्तिकल्पनात्, पचतीत्यादौ फले विक्लित्त्यादि, व्यापारो भावनाभिधासाध्यत्वेनाभिधी-यमाना क्रिया, यद्वाक्यपदीये "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते" ॥१॥ इति । न च साध्यत्वेनाभिधाने मानाभावः, पचति पाकः करोति कृतिरित्यादौ क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपस्य साध्यत्वस्यासत्त्वरूपस्य धातुप्रतिपाद्यत्वकल्पनात्, तदिदमभिप्रेत्योक्तं वाक्यपदीये "असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते" इति, न चैवं घञन्तेऽपि धातुना तदभानापत्तिः, इष्टत्वात्, तत्र प्रकृतिप्रत्यय मामाभ्यां पश्य मृगो धावतीत्यादौ तिङन्ताभ्यामिव साध्यसाधनावस्थयोरभिधानात्, तत्र साध्यत्वं क्रियान्तराकाङ्क्षानुत्थाप-कतावच्छेदकरूपवत्त्वं, साधनत्वं च कारकत्वेनान्वयित्वमिति, न च घञन्ते धातुना साध्यत्वेनाभिधाने मानाभावः । ओदनस्य पाक इति कर्मषष्ठ्या मानत्वात् । न च भवतीत्यध्याहृतक्रियान्वयात् षष्ठी, कर्तृकर्मणोः कृतीति कृदन्तेन योग एव तद्विधानात्, न लोकाव्ययेत्यादिना तादृशयोगे निषेधाच्च । अथ कारकाणां भावनायामेवान्वय इति नियमे ओदनस्य पाक इत्यत्र कर्मषष्ठी भावनाया धातुवाच्यत्वं साधयतु तत्रैव तु किं मानमिति चेत्, विशेष्यतया कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थिति र्हेतुरिति कार्यकारणभाव एवेत्यवेहि, तदुक्तं " सम्बोधनान्तं कृत्वोर्थः, कारकं प्रथमो मतिः । धातुसम्बन्धाधिकार-निष्पन्न

समस्तनञ् ॥ १ ॥ तथा यस्य च भावेन, षष्ठी चेत्युदितं द्वयम् । साधुत्वमष्टकस्यास्य, क्रिययैवावधार्यताम् ॥२॥ " इति, एव स्कारिकाद्यर्थो यथा सम्बोधनान्तस्य क्रियायामन्वयः, त्वं भूरि देवदत्तेत्यादौ निपातानुरोधात्, " समानवाक्ये निघातयु ष्मदस्मदादेशा " इत्यनेन समानवाक्य एव तन्नियमात्, पचति भवतीत्यादौ पश्यमाख्यादिरीत्यैकवाक्यतासत्त्वादेव निघातस्वीकारात् ॥ १ ॥ क्त्वोऽर्थे, क्रियाव्यवधिगमने क्त्वमुजितिविहितः, क्रियायामन्वेति, क्रियाया अभ्यावृत्तिः पुनः पुनर्जन्म यस्मिन् योऽस्य इति तदर्थात् क्रियायोगे तत्साधुतोक्तेः ॥ २ ॥ तथा कारकं करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः कारकशब्दस्य क्रियापरत्वात्, ॥ ३ ॥ प्रथमो वतिः तेन तुल्यं क्रिया चेद्वतिरिति विहितः, तत्र यत्तुल्यं सा क्रिया यदिस्युक्तत्वात् ॥ ४ ॥ धातुसम्बन्धाधिकारनिष्पन्नं " धातुसम्बन्धे प्रत्ययाः " इत्यधिकृत्य तेषां विधानात् ॥ ५ ॥ असमस्तः समासायोग्यो नञ् प्रसज्यप्रतिषेधीय इत्यर्थः । न च तस्य क्रियान्वये मानाभावः न त्वं पचसि न पुत्रो पचय इ त्यादौ क्रियाया एव निषेधप्रतीतेः, घटो नास्तीत्यत्राप्यस्तित्वाभावस्यैव बोधात्, भूतले न घट इत्यत्राप्यस्तीत्यध्याहारेणैव तथा बोधकल्पनात्, प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेर्हेतुताया एव युक्तत्वात्, ॥ ६ ॥ 'यस्य च भावेन भावलक्षणं' 'षष्ठी चानादरे' इति सूत्रद्वयेन विहितमपि क्रियायामेवान्वेति, पूर्वत्र भावशब्देन तद्योगे साधुत्वाख्यानादुत्तरत्र च भ्रष्टायनत्वस्यार्थतो लाभादिति ॥ ७–८ ॥ स च भावनाख्यो व्यापारः पचतीत्यादौ फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितद्रूपेण भाव्यः, ततस्तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात्, न च नानार्थतापत्तिः, तदादिन्यायेन बुद्धिविशेषादेः प्रवृत्तावच्छेदकानुगमकस्य सत्त्वात्, आख्याते क्रियैकत्वस्यापि तेनैव व्यवस्थितः, पच्याख्य

पदीय "गुणीभूतैरवयवैः, समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" ॥१॥ इति, आख्यातस्य च फलाश्रये व्यापाराश्रये च शक्तिः, तत्र फलाश्रयः कर्म, व्यापाराश्रयः कर्ता, शक्यतावच्छेदकं चाश्रयत्वं, शक्तिविशेषरूपं, न तु फलादिगर्भं, फलादेर्धातुलभ्यत्वात् । मानञ्च तत्र 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रमेव, अत्र हि चकारात् कर्तरि कृदिति सूत्रोक्त कर्तरीत्यनुकृष्य बोधकतारूपां तिबादिशक्तिं तत्स्थानिभूते लकारे प्रकल्प्य तस्य कर्मकर्तृविषयविधानात्, न च दर्शनान्तरीयपरीक्षा व्यापारस्य धात्वर्थत्वाभावात्र लकारविधिः स्यादिति शङ्कनीयम् । तद्वदेव कृतामपि कर्तृकर्मवाचकत्वापत्तेः कर्तरि कृदित्यस्य लः कर्मणीत्यनेन तुल्ययोगक्षेमत्वात्, अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचकत्वमस्तु भावनायावाक्षेपत एव लाभः, घटमानयेत्यादावाक्षेपितव्यक्तेरिव तस्याः प्राधान्योपपत्तेः । पचतीत्यादौ भावनाया विवरणदर्शनात् वाच्यत्वमिति चेत्, न, पाकानुकूलव्यापारवतः कर्तुरपि विवरणविषयत्वाविशेषात्, न च कर्तुर्विवरणं तात्पर्यार्थविषयं पाकं करोतीत्यत्राख्यातार्थकर्मत्वविवरणवदितरेतरान्वये समन्वयविवरणपरमिति न तदर्थनिर्णायकमिति वाच्यम् । भावनायां तुल्यत्वात्, किं च पचति देवदत्त इत्यत्राभेदान्वयदर्शनात् कर्तुर्वाच्यत्वमावश्यकं पक्ता देवदत्त इत्यत्रेव, नचाभेदबोधे समानविभक्तिकत्वं नियामकं तत्त्वमायाभावात्र स इति वाच्यम् । सोमेन यजेत स्तोकं पचति राजपुरुष इत्यादावप्यभेदबोधानापत्तेः । न च कर्तरि लक्षणया सामानाधिकरण्यं, पिनाकपाण्यादिबौमिकानामपि द्रव्यवाचित्वानापत्तेरव्याधिकरणोपस्थेयापत्तेरिति दिक् । अत्र फले व्यापारः प्रधानं, तिङ्कोः कर्तृकर्मसङ्ख्याकाला विशेषणानि, तथापि कर्तृकर्मणी व्यापारफलयोर्विशेषणे, संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि, समानप्रत्ययोपात्तत्वात् । तथा

प्रत्यासत्त्यात्वन्यकर्तृकर्मोपस्थितिर्हेतुरिति फलितं, नैयायिकादीनामाख्यातार्थसंख्यायाः धात्वर्थसंख्याप्रकारकबोधं प्रथमान्तपदजन्योपस्थितेर्हेतुहेतुमद्भावो वाच्यः, सोऽपि चन्द्र इव प्रथमाय पचत्याद्याख्यातार्थसंख्याप्रकारकबोध प्रथमान्तपदजन्योपस्थितिविषयत्वघटितो वाच्य मुखं दृश्यते देवदत्तो भुक्त्वा व्रजतीत्यादौ चन्द्रैत्रयोराख्यातार्थानन्वयादितरविशेषणत्वतात्पर्यविषयत्वघटितो वाच्यः, अतीतमा इत्यतिगौरवमिति मन्तव्यम् । कालस्तु व्यापारे विशेषणं, न तु संख्यावत् कर्तृकर्मणोस्तदन्वयः सम्भवः, व्यापारसत्त्वे पचतीत्यनापत्तेः चनाके कर्तरि पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च, नापि फले तदन्वयः, फलानुत्पाददशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पश्यतीत्यापत्तेश्च, न चामचावजनीकृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिः, परमयत्नस्याज्ञानादप्रयो गात्, किञ्चिच्चेष्टादिनाऽवगतौ चापमुत्तिष्ठति ननु शक्नोत्युत्थातुमिति लोकप्रतीतेरिष्टत्वात्, इत्थं च तिङर्थो विशेषणमेव प्रधानं तु भावनेवेति स्थितम् । यदि चाख्यातार्थप्राधान्यं स्यात तदा देवदत्तादिभिः सममभेदान्वयात् प्रथमान्तार्थस्य प्राधान्यापत्तिस्तथा च पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यता न स्यात्, प्रथमान्तार्थमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः, न चैवमप्रथमासामानाधिकरण्याच्छक्तृप्रसङ्गः, तथापि द्वितीयाया दुर्वार त्वेनाकर्षवाक्यस्यैवासम्भवापत्तेः, न च पश्येत्यत्र तमिति कर्माध्याहार्यम्, वाक्यभेदप्रसङ्गात् । एवं च भावनाप्रका रकबोधे प्रथमान्तपदजन्यपदार्थोपस्थितिः कारणमिति नैयायिकोक्तमयुक्तम् । किं त्वाख्यातार्थकर्तृप्रकारकबोधे धातुजन्यो पस्थितिर्भावनात्वावच्छिन्नविषयतया हेतुः, भावनाप्रकारकबोधं प्रति तु धात्वर्थभावनोपस्थितिरेव हेतुः, पश्य मृगो धावति पचति भवतीत्यादावुरोधादिति कल्पनीयम् । इत्थं च पचतीत्यत्रैकाश्रयिका पाकानुकूला भावना, पच्यत इत्यत्रैकाश्रयिका या

एव निपुणं प्रगल्भते ॥ १ ॥ सर्वशोपशमनेऽसम्भवात्मवसन्नमानैः पुनरस्माभिः सर्वमेवोपपादयितुं शक्यम्, व्यवहारनयानुसारिणां नैयायिकानां नामार्थविशेष्यकस्येव शब्दनयानुसारिणां शाब्दिकानां भावप्रधानमाख्यातमिति वदतां धात्वर्थविशेष्यकस्यापि बोधस्य जायमानस्य वाङ्मात्रेण निराकर्तुमशक्यत्वात्, नयव्युत्पत्तिवैचित्र्याधीनस्य फलीभूतशाब्दबोधवैचित्र्यस्य दृष्टेष्टाविरुद्धत्वात्, अत एवानुलोमप्रतिलोमक्रमेण तत्तत्प्रकारवैचित्र्यमानमपि व्याख्यातम्। इत्थं तण्डुलं पचति चैत्र इत्यत्र चैत्रकर्तृकक्रियाफलाश्रयत्वेन तण्डुलमुख्यविशेष्यकोऽपि बोधः स्यादिति चेत्, तथा व्युत्पन्नस्य स्यादेव अत्र पचतीत्यत्र विक्लित्त्यनुकूलव्यापारस्याधःसन्तापनादेः धातुशासनमूलशब्दनयव्युत्पत्त्यधीनो बोध उदेतु इति नायं प्रसङ्गः। साध्यत्वस्य च व्यापारे फलस्यानुकूलतया प्रातिस्विकरूपासम्बन्धेन च भावनात्वेन नयव्युत्पत्तिवैचित्र्यात् द्विधा मानम्, तस्य च साध्यत्वस्य क्रियमाणं कृतमिति रूपसंसर्गविच्छेदकत्वमेव मानं, साध्यत्वावच्छिन्नानुकूलताया एव संसर्गत्वोपगमात्, घटो नश्यतीत्यत्रापि द्रव्यार्थत्वनियामक नये सिद्धत्वापन्नसाध्यत्वत्वेनान्यनये च शुद्धसाध्यत्वेन मानमित्यन्यदेतत्। घटं आनातीत्यत्राप्यनेनैव सम्बन्धेन घटस्य सम्बन्धेन घटाभिभाभयकस्य सन्नातमेदादिरूपनाशानुकूलव्यापारस्य मानं, घटं आनातीत्यत्रावरणभङ्गावच्छिन्नबोधव्यापार एवार्थोऽतीतानागतत्वविकल्पाकाररूपव्यापारमानम्, यत्तु, भूषणसारकृतोक्त ज्ञानातीत्यत्रावरणभङ्गावच्छिन्नबोधव्यापार एवार्थोऽतीतानागत सत्यपि ज्ञानजन्यस्यावरणभङ्गस्याश्रयकत्वादतीतो घटो ज्ञायत इत्यादावतीतघटादेस्तदाश्रयता च विषयताया इव नैया यिकानां तस्यार्थसिद्धान्तात्रेति, तदापातरमणीयं, नैयायिकसाङ्ख्यमतयोः परस्परपरामर्शोपहतत्वात्, भेदाभेदसदसत्कार्याभ्युपगन्तृस्याद्वादमार्गाश्रयणं विना च अबोधप्रसङ्गः, अत एव शब्दानां निष्पत्तिं ज्ञप्तिं चाधिकृत्य 'सिद्धिः स्याद्वादात्' इति

तिर्यग् विलोकयति सद्यः । अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥१॥" इत्यादावेककर्तृकनिराकाङ्क्षानेकक्रियायां प्रत्येकं प्राधान्ये चतुर्वाक्यभेदापत्तावपि निष्प्रत्यूहः क्रमेलककगमन्यायपातात्। न चात्र नवपरिणयवध्वाभिकर्तृकत्वेनानुगतस्य एकस्य व्यापारोऽस्त्यनुभूयते वा, एकत्रानेकक्रियासम्बन्धघटितदीपकालङ्कारस्यैवास्याभिमतत्वात्, न चात्रोदाहरणस्य तत्र एककर्तृकत्वसम्बन्धेन क्रियाणां परस्परमन्वयः, स्वाभाविकक्रियान्तराकाङ्क्षाविषयतानवच्छेदकरूपत्वाच्च न क्रियास्वभाव इत्युद्भावनेऽपि वाक्यभेददोष उद्धर्तुं शक्यः, विनिगमनाविरहेण प्रत्येकं क्रियाप्राधान्यापत्तेस्तदवस्थत्वात् सर्वक्रियाणामाख्यातार्थकर्तर्येकत्र इत्यमिति न्यायेनैकस्मिन् कर्तर्यन्वयस्वार एव हि तस्योद्धर्तुं शक्यत्वात्। यत्तु अत्रापि निपातानुरोधादेकक्रियाया एव प्राधान्यम्, अन्यासां साधनत्वावेक्षमाख्यातं "तिङ्तिङ" इति सूत्रयता तिङन्तानामनेकवाक्यत्वस्वीकारात्, "एकतिङ्वाक्यम्" इत्यस्य वार्तिकस्य चैकतिङ्विशेष्यकं वाक्यमित्यभिप्रायादिति, तन्न, निपातकृतं प्राधान्यमपि क्वचिदिति विनिगन्तुमशक्यत्वात्, चरमपठितत्वस्यापि चस्य भूयो व्यवधानस्यैव व्यभिचारादस्यार्थस्य स्वगृहपरिमाणाभावाच्च, अन्यथा निपाते क्रियाप्राधान्यं तत्सत्त्वे च स इत्यन्योन्याश्रयस्य दुर्वारत्वात्, किञ्च साध्यसाधनवर्तिक्रियाक्रिययोः परस्परमन्वयस्वीकारे पाकेन भुङ्क्त इत्यर्थे पचति भुङ्क्ते इत्यादेरपि प्रसङ्गः, पठन् गच्छतीत्यर्थे पठति गच्छतीत्यादेरपि च, मम स्वाख्यातस्य सार्वविधेयकत्वाभ्युपगमे एव हेतुत्वाभावे प्रसङ्गः। किञ्च चातुर्यप्राधान्याभ्युपगमे चातुर्यमुख्यविशेष्यकशाब्दबोधजनकसामग्र्या चातुर्य एव संख्याबोधकस्वसामान्यस्य भासकस्य च दुष्करत्वात् कर्तृकर्मोभयोरनभिधाने संख्यानन्वयप्रसङ्ग इति न किञ्चिदेतत्—" सम्प्रसादनिरूपेव [illegible], प्राग् जयो भवतु [illegible]। अर्थसाधिमसमर्थने पुन—र्यौग

मेतन्मयास्मार्तं स्याद्वादेनाविरोधमाह ॥१॥ क्वचे तत्तरङ्गजमनु निमज्जनोन्मज्जने, सृजन्ति निजपर्ययाः प्रतिक्षणं पदार्थे पृथक् । निशम्य भवनादिषु क इव तद्विवेके प्रभुः, स एव हि विजृम्भते विशदकेवलज्ञानवत् ॥२॥" सघनं इत्यादिस्यादेरिवेति (२५ १ ६) तृष्णामूलकहिंसाविषयकत्वेनोभयोरविशेषादित्यर्थः, धर्मे इति धर्मे वाच्ये बलवदनिष्टाननुबन्धित्वांशे वेत्यर्थः, प्रमाणत्वानुपपत्तेरिति (२५ १ ६) "न हिंस्यात् सर्वभूतानीति" सामान्यवचनविरोधादित्यर्थः । न च सामान्यशास्त्रतो विशेषशास्त्रस्य बलवत्त्वाद् हिंसाविशेषतः पूर्वं हिंसात्वसामानाधिकरण्येन पापजनकत्वप्रत्ययेऽनन्तरं विशेषशास्त्र-पर्यालोचनायां तदितरहिंसात्वेन तज्जनकत्वम् इति न विरोध इति वाच्यम् । सर्वपदसमभिव्याहारेण हिंसात्वावच्छेदेनैव सामान्यवचनतः पापजनकत्वलाभात्, पर्यायान्तरार्थमाश्रितेऽपि विशेषविधावुत्सर्गनिषेधोक्तदोषापरिहारादेवकोक्त इव हारनिधौ, तथा तृष्णामूलकहिंसात्वावच्छेदेनैव सामान्यनिषेधपर्यवसानाभ्युपगमेन यागादिविषयस्य विरोधित्वादप्रमाणमेव, परेऽभ्युपगमाच्च निषिद्धोऽपि वेद इति मन्तव्यम् । यत्तु प्रतिपदोक्तफलत्यागेन विविदिषार्थतया कर्मकाण्डस्यापि प्रामाण्यमिति वेदान्तिपद्धतिमनुरुध्यते, तदज्ञानविलसितं, विभाषितस्वरविहिते कर्मणि तस्याभावपरमपेक्षाभ्यां विविदिषार्थताया ममितः, अन्यथाऽभिचारोद्देशेन वेदविहितं श्येनयागमपि विविदिषार्थतया किमिति नाद्रियेरन् । तदुक्तम् "वेदोक्तत्वान्मनःशुद्ध्या, कर्मयज्ञोऽपि योगिनः । ब्रह्मयज्ञ इतीच्छन्तः, श्येनयागं त्यजन्ति किम् ॥ १ ॥ भिन्नोद्देशेन विहितं, कर्म कर्मक्षयाक्षमम् ॥ क्लृप्तभिन्नाधिकारं च, पुत्रेष्ट्यादिवदिष्यताम् ॥२॥" इति, अस्यपिकमेतदर्थं लतायां स्फुटीकृतमस्माभिरिति विद्यार्थिना तत्र एतदवधार्यम् । अपूर्वार्थत्वं पुनरिति (२५, १ ७) लोकप्रमाणाविषयार्थत्वं पुनरित्यर्थः तेनार्थमपि

बोधकत्वेन मीमांसैव प्रमाणं नोपनिषदिति रिक्तं वचः, उपनिषदोऽप्यपूर्वपरमात्मप्रतिपादकत्वेनाविशेषात्, येऽपि कविशेष
ग्रहस्य च पदपाठमात्रस्यादित्युक्तं भवति, स एवार्थः स्यादिति (१५. १ १४) लोके वेदे च सम्बन्धव्युत्पत्तेस्तुल्यत्वा
दिति भावः । ये तु प्राभाकरा वेदस्यापौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव स्वातन्त्र्येण प्रामाण्यमा-
स्थिषत, लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरनुवादकतामात्रं वाक्यस्येति निर्णीतवन्तः, तेषां लोक
वेदसाधारणव्युत्पत्तिबलेनान्विताभिधानं प्रसाधयतां समस्तायातप्रतिपादकत्वस्य लोकेऽप्यविशेषादर्धजरतीयन्यायापातः,
तदुक्तं "निर्णीतशक्तेर्वाक्याद्धि, प्रागेवार्थस्य निर्णये । व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥१॥" इति, यावती हि वेदे
सामग्री तावत्येव लोके भवन्ती कथमिव नार्थमवगमयेत्, लिङ्गं तु परिपूर्णमप्यवगतमपेक्षणीयव्याप्तिस्मृतिविलम्बात् किं
निर्णेतुं प्रगल्भताम्, अन्वयस्य प्रागेव प्रतीतेरनुवादकपर्याप्तमपेक्षात् । न च लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति तद्वि
लम्बादर्थप्रत्ययविलम्बः, लोकेऽप्याप्तोक्तत्वानिश्चयेऽप्यर्थप्रतीतेस्तस्य तदहेतुत्वात्, कथमन्यथा पदानुक्रमेण पठ्यमानेषु
मन्वादिवाक्येष्वपौरुषेयत्वाभिमानिनो गौतममीमांसकस्यार्थप्रत्ययः, न चासौ भ्रमः, पौरुषेयत्वनिश्चयेऽपि तदबाधात् । न
चानाप्तोक्तत्वशङ्कानिरासद्वारैव तदुपयोगः स च क्वचिदपौरुषेयत्वनिश्चयात् क्वचिदाप्तोक्तत्वावधारणादिति न दोष इति
वाच्यम्, एवं ह्यपौरुषेयत्वस्याप्रतीतौ संदेहे वा वेदो न किञ्चिदभिदध्यादित्याप्तोक्तत्वनिश्चयोत्तरकालं लोक इव वेदेऽप्यपौरुषेय
त्वनिश्चयोत्तरकालमनुमानस्य वाक्यानुवादकत्वाविशेषापत्तेर्दुरुद्धरत्वात् । तदुक्तमुदयनाचार्यैः कुसुमाञ्जलौ "व्यस्तपु
दूषणाशङ्कैः, स्मारितत्वात्पदैरमी । अन्विता इति निर्णीते, वेदस्यापि न तत् कुतः ॥१॥" इति, अमी पदार्थाः, तदनुवादकत्वम्,

तस्मादियं माभाकरमूढकल्पनाऽज्ञानमूलैवेति मन्तव्यम्। ततः सुगतादियदिति (२५–२–२) यथा सुगतादयः परस्परवि रुद्धभाषित्वेन न प्रमाणं तथा श्रुतयोऽपि नानावादिविप्रतिपत्तिकवलितार्थाभिधायित्वान्न प्रमाणमित्यर्थः । प्रामाण्य चात्र प्रमाऽयोगव्यवच्छेदरूपं साध्यम्, अन्यथा प्रमात्वाभिमते सुगतादौ तन्निषेधेऽप्रसक्तप्रतिषेधापत्तेरिति समर्थनीयम्। चार्वाक-मतमुत्थापयितुमाह माप्यकृत् तथेष्टत्यादित्यादि (३५–२–३) तत् व्याचष्टे इयिकस् नापि समय (३५–२–३) इत्यादि, अवेधतारूप इति (२५–२–५) चार्वाकमतप्रवर्तकमनुष्यरूप इत्यर्थः। प्रत्यक्षमेकमिच्छन्ति च इति (२५–२–६) तथा च माप्ये एकेषामित्यत्र एकं प्रमाणमिच्छन्तीत्येकेषां चार्वाकास्तेषामिति व्याख्येयमित्यर्थः। इष्टिः प्रतिज्ञा, अभावसिद्धेरिति (३५–२–१०) अभावप्रसङ्गादित्यर्थः। प्रमाणान्तरस्येति (३५–२–१२) प्रत्यक्षातिरिक्तप्रमाणस्येत्यर्थः। तद्वचनस्य (३५ २ १२)सर्वज्ञवचनस्य, हेतुवादरूपस्य(३५-२ १३)हेतुग्राह्यार्थविषयस्य, अहेतुवादरूपस्य (३५ २ १३) आज्ञाग्राह्यार्थ विषयस्य, स एव सर्वज्ञ एव, अतिप्रसङ्गस्य दुष्परिहरत्वादिति, (३६–१–१) तथा च प्रतियोगितद्व्याप्येतरयावत्-प्रतियोग्युपलम्भकसमवधानरूपायास्तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकस्वरूपाया वा योग्यताया अभावात् योग्यानुप लब्ध्यसम्भवस्या न प्रत्यक्षं तदभावग्राहकं, तत्सहकृतस्यैव तस्य तदभावग्राहकत्वनियमादिति फलितम्, न चासत एव सर्वज्ञादेः प्रमाणान्तरस्य चाऽभासासिद्धस्याभावः चक्षुरादेरस्येव प्रत्यक्षतः सुज्ञान इति वक्तुं शक्यम्, अनुपलम्भकाले भासासोपलम्भ कसामग्र्या अभावात्, तत्काले चानुपलम्भाभावात् तस्याशक्यनिषेधत्वात्। तदुक्तं "दृष्टोपलम्भसामग्री, चक्षुरादिर्वियोग्यता। न तस्यां नोपलम्भोऽस्ति, नास्ति सानुपलम्भने॥१॥" इति, चक्षुरादि नास्तीत्यस्य च तद्वे चक्षुरभावोऽस्तीत्येवार्थ इति बोध्यम्,

भाष्ये—असिद्धेरिति प्रमाणत्वेन बाधसिद्धेरित्यर्थः। तामेव प्रदर्शयन् वादिनो विरुद्धमापत्त्वमुद्भावयति प्रत्यक्षमित्यादिना ( ३६–१–२ ) गौणत्वात् प्रमाणस्येति ( ३६–१–२ ) प्रमाणस्य अनुमानप्रमाणस्य, गौणत्वाल्लौकिकप्रामाण्यव्यवहारविषयत्वेनोपचरितत्वादित्यर्थः। दुर्लभ इति ( ३६–१–२ ) उपचरितस्य मुख्यकार्याकारित्वादित्यर्थः, नहि गंगात्वेनोपचरितं तीरं स्नानावगाहनादिकार्यं साधयति, सामान्य इत्यादि ( ३६–१–२ ) धूमेन वह्निसामान्ये साध्ये सिद्धसाधनं वह्निमात्रस्य सिद्धत्वात्, पर्वतीयवह्नेर्वेद्यस्यासिद्धेः विशेष्ये पर्वतीयवह्नौ साध्येऽनुगमाभावो व्याप्त्यभावो, यत्र धूमस्तत्र पर्वतीयवह्निरित्येवमनुगमयितुमशक्यत्वात्, सर्वत्र सामान्ये विशेषे वा साध्ये विरुद्धव्यभिचारित्वम्, पक्षे साध्याभाववत्प्रवृत्तिसंशयेन तत्संशयापादकस्य चाप्रतिष्ठत्वात्तस्मात् व्याप्तेरगमकत्वान्नानुमानं प्रमाणमित्याशयः। न च व्याप्त्या सामान्यसिद्धिः पक्षधर्मतया च विशेषसिद्धिरिति न दोष इत्यपि वक्तुं शक्यम्, पित्रोर्ब्राह्मणत्वेन पुत्रब्राह्मण्यतानुमानात् पक्षधर्मतया अनन्तत्वादिति भावः। संवादकत्वापीति (३६–२–३) यद्यपि देशकालनरान्तरप्रत्यक्षाणि प्रमाणानि संवादकत्वात् मत्प्रत्यक्षवदित्यनुमानं कर्तुमशक्यम्, सार्वत्र्यपक्षस्य पक्षमसिद्धेरसम्भवात्, तथापि स्वप्रत्यक्षदृष्टान्तेन संवादकत्वलिङ्गेन प्रत्यक्षत्वावच्छेदेन प्रामाण्यसाधने तात्पर्यं द्रष्टव्यम्, ननु संवादकत्वादिलिङ्गेन प्रामाण्यानुमितावपि नानुमानप्रामाण्यसिद्धिस्तस्याः पक्षागृहीतासंसर्गकविस्मृतिरूपाया उत्कटकोटिकसंशयरूपाया वा सम्भावनाया अनतिरिक्तत्वात्, क्वचिन्निर्विकल्पकएवाविसंवादकस्य व्यवहारहेतुत्वेऽप्यन्यत्र बहुशः सम्भावनाया एव तथात्वात्, तयैव सर्वोपपत्तेः, अनुमानेऽपि च संवादाभिमानात् प्रामाण्यसम्भावनायां न दोषः, अनादिवासनामूलकाज्ञविषाणादिविकल्पव्युदासायाध्यक्षमूलकत्वं

विकल्पविशेषत्वम्, विकल्पापादित एव वा संवादो ग्राह्यः, अभ्यासमूलकस्याप्यवान्तरस्य सविकल्पकस्य च सम्भवात्, तथा च परमव्यापारेः संवादकत्वेन प्रामाण्यसम्भावना युक्तैव, स्वाध्यक्षस्यापि निर्विकल्पकस्य सन्मात्रावगाहित्वस्वविषयत्वप्रामाण्यावधारित्वानां स्वरूपतः स्वभावत्वेन, तत्तद्रूपेण तु सम्भावनाविषयत्वेन, असद्विषयत्वाभावव्याप्येन सद्विषयत्वेन सन्मात्रावलम्बनत्वस्य स्वप्रकाशत्वव्याप्येन प्रकाशत्वेन स्वविषयत्वस्यानवस्थापादकपरग्राह्यत्वशून्यत्वे सति ग्राह्यत्वेन प्रामाण्यस्यापि स्वग्राह्यत्वस्य तथा तथा सम्भावनाविषयत्वात्, न चैवं तेषां रूपाणामसत्त्वापत्तिः, स्वरूपातिरिक्तत्वे इष्टत्वात्, नहि निर्विकल्पक सन्मात्रावलम्बनमित्यादिबुद्धेस्तन्मते प्रमात्वम्, अयं घट इत्यादिधियामपि प्रमात्वापत्तेः, इत्येवं तत्त्वतः प्रत्यक्षमेव प्रमाणं, सम्भावनारूपव्यवहारात्त्वनुमानादिकमपीति चार्वाकमतमुपपद्यत इति चेत्, न स्वरूपतो निर्विकल्पकग्राह्यत्वस्य तत्तद्रूपेण सम्भावनाविषयत्वस्य च भेदाभेदात्मकत्वस्याभ्युपगमं विनानुपपत्तेः, व्यक्तेरिव जात्यादेरपि परमार्थसत्त्वेन सविकल्पकस्यापि सन्मात्रावलम्बनत्वात् अनुमिनोमीति विलक्षणप्रतीतिसिद्धप्रमान्तरजनकत्वेनानुमानस्यापि प्रमाणान्तरतायाश्चान्यत्र व्यवस्थापितत्वादिति दिक् । अन्यथादिमतमुत्थाप्य दूषयति भाष्यकृत्–तथेत्यादित्यादिना (२६–२–६) तवेष्टत्वात् प्रत्यक्षादिप्रमाणं प्रमेयं च सर्वमुपप्लुतमेवेतीष्टत्वाच्च दोषः, इति, इयम्, एकेषां प्रत्यक्षापुच्छेद्य इत्येकं शून्यमिच्छन्ति ये तेषाम्, अप्रमाणिकैषामप्रमाणसिद्धेव, इष्टिः प्रतिज्ञा, सर्वमुपप्लुतमिति वचनमात्रात्स्वोपप्लवसिद्धौ सर्वमनुपप्लुतमिति वचनात् तदनुपप्लवस्यापि सिद्ध्यापत्तेरिति तदर्थः, इष्टौ न विशिष्यत (१६-२-७) इत्यनन्तरं वाङ्मात्रेणेति शेषः, स्वयमसिद्धमिति (२१–२–१) शून्यवादस्य निरस्तत्वादिति भावः । तथासतीति (१९–२–१०) यदृच्छयेन्द्रियप्रत्यक्षादेः प्रमाणान्तराभाव

प्रारब्धे भवतीत्यत्र, स्वेष्टलस्य विपर्ययं भवेदिति (२६ २ ११) अन्याभिमतवस्त्वभावे स्वप्रत्यक्षानुमानयोरिव प्रवृत्तेरित्यर्थः, माप्यमिक एव प्रवृत्ते ननु चेत्यादि (२७-१-२) ज्ञानप्रामाण्यस्य दुर्ग्रहत्वादगृहीतप्रामाण्यकं ज्ञानं नानुपप्लुतत्वं साधयेदिति प्रश्नकार्थः, स्वतः प्रमाणस्येति (२७-१-५) स्वप्रकाशमहिम्ना स्वेन स्वात्मेव प्रामाण्यमपि गृह्यत इति गुरुमताभिप्रायं पूर्वपक्षः। सर्वप्रवादिनामिति (२७-१-५) स्वस्वज्ञानस्य स्वतः प्रामाण्यग्रहे सर्वे प्रवादाः सत्याः स्युरिति भावः। अपि च ज्ञानेन स्वतः स्वप्रामाण्यग्रहे ज्ञानप्रामाण्यसंशय एवोच्छिद्येत, ज्ञानग्रहे प्रामाण्यनिश्चयाभिधिते च संशयायोगात्तदग्रहे धर्मिज्ञानाभावात्, समानधर्मवत्तया धर्मिज्ञानस्य चान्वयव्यतिरेकाभ्यां संशयहेतुत्वावधारणादित्यपि द्रष्टव्यम्। ननु प्रवृत्तिमात्रे न ज्ञानप्रामाण्यनिश्चयो हेतुः, अनभ्यासदशायां प्रामाण्यसन्देहादपि प्रवृत्तिदर्शनात्, प्रामाण्यज्ञानत्वेनैव प्रवृत्तिहेतुत्वात्, प्रवर्तकज्ञानेऽगृहीताप्रामाण्यकत्वनिवेशश्चौन्ये तद्धेतुत्वाद्वा, प्रामाण्यनिश्चयस्याभ्यासहेतुसंशयापगमार्थमेवोपयोगात्। न च संशयात् प्रवृत्तौ प्रेक्षावत्त्वहानिः, इष्टत्वात्, प्रेक्षावत्त्वस्य यथोपदर्शितस्य सर्वदा सर्वेषामभावेन विना सर्वज्ञं कस्यचित्क्वाचित्कस्यचिदेव प्रेक्षावत्त्वव्यवहारात्। तदुक्तं—"प्रेक्षावत्ता पुनर्ज्ञेया, क्वाचित् कस्यचित् क्वचित्। अप्रेक्षाकारिताऽप्येवं मन्यध्वाद्वेषवेदिनः ॥ १ ॥" इति, यत्तु सकम्पत्वनिष्कम्पत्वे प्रवृत्तिगतजाती प्रामाण्यसंशयनिश्चयजन्यतावच्छेदिके इति, तत् न, अंशे प्रामाण्यसंशयनिश्चयात्मकज्ञानजन्यप्रवृत्तौ तयोरांशिकत्वेन जातित्वासिद्धेः, अव्यवहितोत्तरत्वसम्बन्धेन संशयनिश्चयविशिष्टत्वयोरेव सकम्पनिष्कम्पपदार्थत्वात्, तदिह प्रामाण्यसंशयादेव विचारे प्रवृत्तिर्भवतु तदुत्तरं परीक्षया प्रामाण्यनिश्चयादनुपप्लुतत्वसिद्धिः स्यादित्याशयवान् प्रवृत्ते स्यान्मतं विचारोत्तरकालमित्यादि (२७-१-८) एवं

संशयादिव्यभिचारोत्तरं साधकप्रामाण्यसम्भावनया तत्त्वोपप्लवोऽपि शक्यसाधन इत्याद्यर्थमस्तत्त्वोपप्लववादी स्वमत समाधत्ते एव तर्हीत्यादि ( २७-१-१० ) विचार्यंत ( २७-१-११ ) इति, तदधीनप्रमेयतत्त्वसम्बन्धनाय विचारासहत्वेनोभीयत इत्यर्थः । नयनकुशलादेरिति, ( २७-१-१३ ) इन्द्रियावरणक्षयोपशमादेरित्यर्थः । तदविनाभाविलिङ्गाभावात्, ( २७-१-१४ ) तत्त्वादुष्टत्वाविनाभाविलिङ्गाभावात्, तत्कार्यं (२७-१-१५) नयनकुशलतादिकार्यम्, लिङ्गमित्यत्रादुष्टतया इत्यनुषञ्जनीयम्, उपघातकत्वासम्बन्धो व्याप्यतावच्छेदको विशेषणताविशेषश्च व्यापकतावच्छेदक इति बोध्यम् । तदव्यभिचारित्वाभावादिति ( २७-२-१ ) ज्ञानमात्रस्योपघातकत्वासम्बन्धेन दुष्टकारणकत्वेऽपि सत्त्वात् व्यभिचारादित्यर्थः, प्रमात्वतच्छेदेनादुष्टकारणारब्धत्वव्याप्तिस्वीकारे गुणवत्कारणारब्धत्वव्याप्तिरपि स्यात्, तथा च वेदे गुणवत्पुरुषप्रणीतत्वस्य बलादापत्तेः, तत्रापौरुषेयत्वमनोरथोऽपि तव न पूर्येतेति मीमांसकं प्रत्याह तत्त्वोपप्लववादी किञ्चेत्यादिना ( २७-२-३ ) नापि बाधानुत्पत्त्येति ( २७-२-११ ) प्रामाण्यं गृह्यत इत्यनेन योगः, नापि प्रवृत्तिसामर्थ्येनेति (२८-२-३) अत्रापि प्रामाण्यं गृह्यत इति योजनीयम् । फलेन जलस्नानादिलक्षणेन, अभिसम्बन्धः च उपधेयोपधायकभावः, तस्याः संविदः, तस्मिंश्च संविदः प्रमाणत्वनिश्चये च सति, तदवगमात् फलाभिसम्बन्धावगमात्, पुनरावर्तत इति चक्रकमिति ( २८-२-९ ) अन्यथा प्रमाणात् फलाभिसम्बन्धावगमे तत्प्रामाण्यस्य पूर्वज्ञानेन सिद्धावन्योन्याश्रयः फलाभिसम्बन्धान्तरोपजीविप्रमाणान्तराश्रयणे च पुनः पुनर्दोषापत्तिरित्येवात्र चक्रकं बोध्यम्, नतु तृतीयापेक्षामात्रम्, यद्वा प्रवर्तकज्ञानप्रामाण्यनिश्चयात् प्रवृत्तिः प्रवृत्तेरर्थक्रियानिश्चयस्ततश्च प्रवर्तकज्ञानप्रामाण्यनिश्चय इत्येवं चक्रकं योजनीयम् । पुनराहस्य

मिधानं चैतदर्थमपि । अदोष इति ( ३९-१-२ ) अनभ्यासदोषो नेत्यर्थः । किमर्थमिति ( ३९-१-३ ) प्रामाण्यपरीक्षणं विनाऽपि प्रवृत्त्युपपत्त्यादित्यर्थः । लोकवृत्तानुवादार्थमिति ( ३९-१-२ ) प्रेक्षावल्लोकाचारानुरोधार्थमित्यर्थः, तथा च प्रेक्षावत्प्रवृत्तौ प्रामाण्यनिश्चयस्य हेतुत्वात् तदादरणीयमिति लभ्यते, तर्हि लोकवृत्तमित्यादि ( ३९-१-३ ) तथा च प्रामाण्यपरीक्षणं मदिष्टसाधनं प्रेक्षावद्व्यापारविषयत्वादित्यादौ प्रेक्षावत्पदार्थोऽभ्रान्तत्वघटकप्रामाण्यज्ञापकान्वेषणे प्रागुक्तदोषजालोपनिपातो दुर्निवार इति प्रघट्टकार्थः । नाप्यविसंवादित्वेनेति ( ३९-१-११ ) एतेनान्यथा वेति पक्षो व्याख्यातः, एवञ्च सौगताभिमतं प्रामाण्यं तत्त्वोपप्लववादिना दूष्यत इति बोध्यम् । तदव्यवस्थितौ ( ३९-२-८ ) प्रमाणतत्त्वाव्यवस्थितौ, कुत इति ( ३९-२-८ ) प्रमाणतत्त्वव्यवस्थाधीनत्वात् प्रमेयतत्त्वव्यवस्थितेरिति भावः । विचारादित्यतः ( ३९-२-९ ) पूर्वं तस्मादित्यध्याहार्यम् । तस्मात्प्रमाणतत्त्वप्रमेयतत्त्वाव्यवस्थानात् विचारोत्तरं तत्त्वोपप्लवः सिद्ध्यतीत्यर्थः, एवं निर्णीते तत्त्वोपप्लववादिपूर्वपक्षे सिद्धान्तमाह स्याद्वादी इत्येतदपि सर्वमसारमित्यादि ( ३९-२-९ ) किं तर्हि सुनिश्चितासम्भवद्बाधकत्वेनेति (३९-२-१५) ननु किमिदं प्रामाण्यज्ञापकाभिधानम् उत स्वरूपाभिधानं, नाद्यो ज्ञापकत्वस्येवानुष्ठानकसन्दोहोत्पादकत्वादेरपि त्यागायोगात्, ज्ञानधर्मत्वेनाभ्यासानभ्यासकाले ज्ञाप्यज्ञापकभावस्य व्यवहारान्तर्भावानन्तर्भावाभ्यां तदव्यवस्थापाच्च सर्वत्र वक्तुं शक्यत्वात्, स्वाश्रितयाऽभ्यस्तज्ञानगृहीतेन तेन तज्जातीयत्वलिङ्गाच तद्द्वारा पूर्वज्ञानप्रामाण्यग्रहसाम्ये एकतरपक्षपातायोगाच्च, अत एव न द्वितीयोऽपि, स्वप्रकाशमहिम्ना स्वस्यैवोक्तस्य सर्वस्य प्रामाण्यस्यापि स्वधर्मत्वेन ग्रहणाविशेषात्, स्वधर्मोऽपि योग्य एव ग्राह्यो नायोग्यः, अन्यथा स्वगप्रापणशक्तेरपि ग्रहणप्रस

ज्ञादिस्पर्शीन्द्रियाद्युत्पादविघटितादुपकारकसन्देहोत्पादकत्वादेतस्याग इति चेत्, सर्वसभिन्नदेशस्थलसमर्थसम्भवप्रापकत्वमपि प्रामाण्यं स्यान्यतराम् तस्य स्वप्रकाशमहिम्ना स्वाश्रयग्राह्यत्वादिति चेत्, अत्रायमस्माकमाकरग्रन्थः, “ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम्, तदितरत्त्वप्रामाण्यमिति” प्रमाजनकत्वं प्रामाण्यं भ्रमजनकत्वमप्रामाण्यमित्येतदर्थः। अर्थाव्यभिचारित्वोक्तावनुत्पादितवह्निज्ञाने धूमपरामर्शेऽव्याप्तेरर्थपदत्यागे प्रमेयपदमभिप्रेतमाचार्याणामत्रैव स्वारस्यात्, धूमस्याग्न्यव्यभिचारित्वेऽपि प्रमेयाग्न्यव्यभिचारित्वस्याग्निप्रमाव्यभिचारेणैवोक्तिसम्भवात्, अव्यभिचारित्वपदेन नियतत्वस्य साक्षादुक्तावनन्यथासिद्धत्वपूर्ववर्तित्वयोराक्षेपतो लाभाय, जनकत्वं च योग्यव्यक्तावन्वयव्यतिरेकसहचारदर्शनादिसध्रीचीनप्रत्यक्षगम्यं परैरप्युपगम्यत एवेति, प्रमाजनकत्वरूपप्रामाण्यस्याप्रमाजनकत्वरूपाप्रामाण्यस्य चाभ्यासे स्वाश्रयग्राह्यत्वम्, अनभ्यासे च परतो ग्राह्यत्वमपि रूढं, प्रामाण्यग्राहकं च परं स्वाश्रयातिरिक्तं संवादकज्ञानमेव, कारणगुणबाधकाभावज्ञानयोरप्येतन्मुखप्रेक्षित्वात्। न चात्र समानजातीयभिन्नजातीयैकसन्तानभिन्नसन्तानविकल्पचतुष्टयोपनिपातः, उभयस्वीकारात्, देवदत्तघटज्ञाने समानजातीयस्य यज्ञदत्तघटज्ञानस्य, प्रथममरुजलज्ञाने भिन्नजातीयस्योत्तरकालभाविस्नानपानावगाहनाद्यर्थक्रियाज्ञानस्यैकसन्तानमतेऽन्धकारच्छुरितालोकभ्रमवज्ज्म्भज्ञाने निस्तिमिरालोकभ्रमवज्ज्म्भज्ञानस्य भिन्नसन्ताने च समानजातीयज्ञानस्यैकस्य संवादकत्वस्वीकारात्, एकसन्तानेऽभिन्नविषये संवाद्यसंवादकभावाविरोधस्य च मन्दप्रबलसामग्रीसमुत्पाद्यत्वेन निरासात्, तथा च संवादत्वनियामकत्वस्य परिशेषेण संवादकज्ञानं यत्र वर्तते तत्र प्रामाण्यनिश्चयोत्पत्तिरित्येवं नियमाच्च तज्जातीयत्वपरामर्शविकल्पनापेक्षः, संवादकत्वव्याप्तिज्ञानाद्यपेक्षानपेक्षाविचारस्यापि तत्र क्षयोपशमसापेक्षित्वात्,

एवं च प्रकृतग्रन्थेऽपि सुनिश्चितासम्भवद्बाधकत्वं सुनिश्चितो बाधकाभावस्तेन संवादकज्ञानतयोपलभ्यत इति तेनैव यथोक्तप्रामाण्यग्रह इत्यत्र तात्पर्यम् । क्वचिदभ्यासानभ्यासौ स्थितौ (४०–१–६) तथा चाभ्यासानभ्यासावदृष्टविशेषप्रयोज्यौ जातिविशेषावेव ज्ञानगतौ, विषयगतत्वं तु तयोरुपचारादिति मन्तव्यम्, तदिदमाह—"दृष्टादृष्टनिमित्तानां, वैचित्र्यादिह चेतिनाम् । जायते क्वचिदभ्यासोऽनभ्यासो वा कथंचन ॥ १ ॥" इति, ननु कूटस्थनित्यस्यात्मनोऽभ्यासानभ्यासस्वभावत्वं कथं घटेतेति साशङ्कायामाह पूर्वापरेत्यादि ( ४०–१–८ ) परिणामिस्वात्मन उभयस्वभावत्वं न दुर्घटम्, कूटस्थनित्यध्रुवेर्नयविशेषविषयत्वादात्मन्यद्रव्यत्वस्य परिणामित्वव्याप्यत्वकल्पनापेक्षया द्रव्यत्वस्यैव तत्कल्पने लाघवात्, अहं जातो भूत्वा मृतो जात इत्याद्यनुभवस्य सार्वजनीनस्य तत्साधकस्य जागरूकत्वाच्चेति भावः । सर्वस्य सचेतनस्य स्यात् स्वतः स्यात्परतः (४०–२–६) इति, अत्र पद्ये "कतिपयक्रमानुसृता नीराजसिकमपि भ्रमात्, धुरि द्रुमवतो बीजाबीजे विदन्ति कुशीलताः । तदनु कल्पिताद् साधर्म्यादिविषामनुमिन्वते, तदुपरि परिस्पन्दाभ्यासाद् विनाप्यनुमानपम् ॥१॥ तथाभ्यासे स्वतो ध्येयं, प्रामाण्यमितरथा । अनभ्यासे तु परतो, इतो यत्नो यथोचितः" इति ॥ २ ॥ ये तु नैयायिकमीमांसका विशेष्यावृत्त्यप्रकारकत्वादिकं नानाविधं प्रकृत्यनौपयिकं प्रामाण्यमवगमय्य व्यवहारोपयोगिनस्तद्वति तत्प्रकारकत्वस्यैव ज्ञानगतप्रामाण्यस्य स्वतस्त्वपरतस्त्वयोर्विविधं विप्रतिपद्यन्ते, तेषामियं विप्रतिपत्तिः, ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं नवेति, अत्र सकलानुगतस्यैकस्य प्रामाण्यस्याभावात् घटज्ञानप्रामाण्यस्य घटज्ञानग्राहकेणाग्रहाच्च घटत्ववति घटत्वप्रकारकत्वादिकं तदप्रामाण्याग्राहकस्याभयग्रहत्वव्यापकविषयताकं नवेति तदर्थः । प्रमेयत्वादिना व्यापकतया अतिप्रसञ्जकत्वात्

एवं च प्रकृतग्रन्थेऽपि सुनिश्चितासम्भवद्बाधकत्वं सुनिश्चितो बाधकाभावस्तेन संवादकज्ञानबोधोपलक्ष्यत इति तेनैव यथोक्तप्रामाण्यग्रह इत्यत्र तात्पर्यम् । क्वचिदभ्यासानभ्यासौ स्वत इति (४०—१—६) तथा चाभ्यासानभ्यासावस्थाविशेषप्रयोज्यौ ज्ञातिविशेषावेव ज्ञानगतौ, विषयगतत्वं तु तयोरुपचारादिति मन्तव्यम्, तदिदमाह—"प्रत्यक्षनिमित्तानां, वैचित्र्यादिह देहिनाम् । तावत क्वचिदभ्यासोऽनभ्यासो वा कश्चन ॥ १ ॥" इति, ननु कूटस्थनित्यस्यात्मनोऽभ्यासानभ्यासस्वभावत्वे कथं घटेतेति साहङ्कृपार्थकव्यापामाह पूर्वापरेत्यादि ( ४०—१—८ ) परिणामित्वादात्मन उभयस्वभावत्वं न दुर्घटम्, कूटस्थनित्यमुक्तेर्नयविशेषविषयत्वादात्मनोद्रव्यत्वस्य परिणामित्वव्याप्यत्वकल्पनापेक्षया द्रव्यत्वस्यैव तत्कल्पने लाघवात्, अत एवाले भूत्वा पुनः आत इत्याद्यनुभवस्य सार्वजनीनस्य तत्साधकस्य जागरूकत्वाच्चेति भावः । सर्वस्य संवेदनस्य स्यात्स्वतः स्यात्परत (४०—२—६) इति, अत्र पद्ये "कतिपयकमात्स्या नीरावसिकस्यपि भ्रमात्, पुरि सुमहतो वीचीवीचि विचरन्ति कृपीवलाः । तदनु कलिताद् साधर्म्यादिविद्यामनुमिन्वते, तदुपरि परिस्पष्टाभ्यासात् विनाप्यनुमाश्रयम् ॥१॥ तथाभ्यासे स्वतो धेयं, प्रामाण्यमितरथा । अनभ्यासे तु परतो, यतो यत्नो यथोचितः" इति ॥ २ ॥ ये तु नैयायिकमीमांसका विशेष्यावृत्त्यप्रकारकत्वादिक नानाविधं प्रकृतानुपयोगिकं प्रामाण्यमथ प्रकृतस्य व्यवहारोपयोगित्वादिति तत्प्रकारकत्वस्यैव ज्ञानगतप्रामाण्यस्य स्वतस्त्वपरतस्त्वयोर्विविधं विप्रतिपद्य, तेषामियं विप्रतिपत्तिः, ज्ञानप्रामाण्यं तत्प्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं नवेति, अत्र सकलानुगतस्यैकस्य प्रामाण्यस्याभावात् घटज्ञानप्रामाण्यस्य घटज्ञानग्राहकेणाग्रहात् घटत्ववति घटत्वप्रकारकत्वादिके तत्प्रामाण्याग्राहकस्याभयप्रकारत्वव्याप्यविषयताकं नवेति तदर्थः । प्रमेयत्वादिना व्यापकतया प्रविभक्तत्वात्

एवाभ्यासप्रसङ्गः, सिद्धिप्रतिबन्धकस्यावनन्तरं सर्वानुभूयमानानुमितेरुच्छेदप्रसङ्गश्च । न च द्वितीयानुव्यवसायादिना ज्ञानावच्छेदकत्वोक्तप्रामाण्यग्रहेऽपि स्वातन्त्र्येण तद्ग्रहात् स्वातन्त्र्येण तद्ग्रहायानुमानाभ्युपगमावश्यकमिति वाच्यम्, अनुव्यवसाये स्वातन्त्र्येण प्रामाण्याग्राहकतायाः स्वातन्त्र्येण प्रामाण्यग्रहेऽनुव्यवसायसामग्र्याः प्रतिबन्धकत्वकल्पनयैवोपपत्तेः तदपेक्षयाऽभ्यस्तज्ञानप्रामाण्यग्रहे क्षयोपशमविशेषहेतुत्वे लाघवमित्यस्मन्मतमेव युक्तम् । किञ्च तद्विशेष्यकत्वावच्छिन्न-तत्प्रकारकत्वमात्रमपि न प्रामाण्यं, संशयस्याप्येवं तदभावाप्रकारकत्वस्याप्यधिकस्य देयत्वात्, अन्यथेदंत्वांशे प्रमात्वेन भ्रमस्याप्यभ्यावर्णनीयत्वप्रसङ्गात् तद्घटितस्य च प्रामाण्यस्य ग्रहौ स्वतस्त्वपरतस्त्वयोः प्रामाण्यतुल्यकक्षत्वं युक्तिमत्, अपि च प्रामाण्यज्ञाने निश्चितास्त्यो मतिज्ञानविशेषः, स च प्रामाण्यघटकयावत्पदार्थोपयोगादभ्यासाभ्यामासन्नदिति ज्ञाने स्वत एव, अन्यत्र तु परतोऽनुमानादिनेत्यनुद्धतएकान्तदोषोत्पातस्याद्वादेरपि प्रामाण्यस्य ज्ञप्तिस्त्वदीयाज्ञाशालिनो नानुपपन्ना, अस्तु वा सर्वत्र सदा बाधकाभावपर्यालोचनदशायां प्रामाण्यांशे उद्घाटकमेव ज्ञानम्, एकत्रापि ज्ञाने तद्विषयत्वावच्छेदेन ज्ञानजन्यत्वज्ञाना जन्यत्वयोः परोक्षत्वप्रत्यक्षत्वयोरविरोधात्, भावविषयापेक्षयैव प्रमितिभेदस्य तत्र तत्रोपपादितत्वादीदृशज्ञानजन्येऽपाये च भावविषये एकोपयोगत्वपर्याप्तिमद्भिन्नज्ञानाजन्यत्वेनैव प्रत्यक्षत्वव्यवस्थितेरित्यधिकं मत्कृत–न्यायबिन्द्वादेरवसेयम् । कुतस्तस्योपप्लवसिद्धिरिति ( ४०–२–१० ) यत्र प्रमितस्यैवान्यप्रारोपसम्भवादिति भावः । पराभ्युपगममात्रादिति (४०–२–१०) परोपगतप्रमाणाननुगतविकल्पादित्यर्थः, सर्वमवगतमिच्छतामिति (४१–१–५) वैनयिकानामित्यर्थः, सर्वमिच्छन्तीति सर्वेषामेषामिति व्युत्पत्तिसारस्यादेतदर्थलाभः, नैकप्रमाणवादिन इत्यादि ( ४१–१–१० )

नैकमपि प्रमाणं वदन्तीत्येवंशीला अनेकप्रमाणवादिन इत्यर्थः पक्षा इति पदसमर्थसमासोऽयं, तेनास्माकमोपप्लवयाविरामः सन्नव इति द्रष्टव्यम्। तथाद्वैतमसिद्धेरिति (४१-१-१३) स्वपक्षसाधने परपक्षदूषणे सति द्वैतप्रसिद्धेर्बलादापातादि स्यथः। संवृत्येति (४१-१-१४) संवृतिरविद्या तयेत्यर्थः। न परमार्थत इति (४१ १ १४) आविद्यकप्रमाणस्य पारमार्थि कद्वैतसाधनाक्षमत्वादित्यर्थः। परमप्याधीति, आदिना (४१-१-१४) शब्दप्रमापरिग्रहः, प्रमाणेतरेत्यादिना (४१-२-१) स्वभावलिङ्गककार्यलिङ्गकानुपलब्धिलिङ्गकानुमानत्रयविषयस्य चार्वाकाभिमतस्य प्रत्यक्षैकप्रमाणाभ्युपगमविरुद्धस्योत्कीर्त नम्, यथोक्तस्वभ्युपगमे प्रमाणान्तरस्यानुमानरूपस्य सिद्धेः प्रसङ्गात्, स्वयमिति (४१-२-४) परोपगमस्य स्वं प्रत्य प्रमाणत्वादिति भावः। अतिप्रसङ्गादिति (४१-२-५) अनुमानत्रयाभ्युपगन्तुरपि चार्वाकस्यैकप्रमाणवादित्वोक्तौ वैशेषि कादीनामपि तथात्वप्रसङ्गादित्यर्थः। यावान् कश्चिदिति (४१-२-७) अग्निजन्मेत्यनन्तरं भवतीत्युत्तरस्यं केवलमनुषञ्ज नीयम्, अनग्निजन्मेत्यनन्तरं न भवतीति योजनीयम्, यकारो भिन्नक्रमस्तदुत्तरं योजनीयस्तेनान्वयव्यतिरेकव्याप्तिप्रतिप त्तिरनयोः प्रसज्येतेति द्रष्टव्यम्। स्वाकारस्य पक्षुपवर्णितं भवति, यथा श्रुते स्वग्निजन्मातग्निजन्मान्यतरतादात्म्याश्रयत्वनिषेधप्रतीतिरनुपपन्ना प्रसज्येतेति द्रष्टव्यम्। नन्वत्र व्याप्तिप्रतिपत्तेरेव प्रत्यक्षानुकरणकप्रमितित्वेन वैलक्षण्यं साधनीयं तस्करणत्वनोऽस्य प्रमाणान्तरत्वसिद्धेः, तत्प्रदर्शनं च यावान् कश्चिद्धूमः स सर्वो वह्नौ सत्येव भवति तस्मिन्नसति न भवतीत्येतावन्मात्रेणैव भवतीति व्यर्थं जन्मपदमिति चेत्, न, धूमोऽस्तु वह्निर्मास्त्वित्यप्रयोजकत्वशङ्कानिरासद्वारा धूमो यदि वह्निव्याप्यो न स्यात् वह्निजन्यो न स्यादिति विचारपरिणतस्येयो- हस्य व्याप्तिप्रमापकत्वसम्भवात् तादृशविचारोपनयनार्थं जन्मपदोपादानात्, एतेन प्रथमं धूमस्यानुपलम्भ एकस्तदनन्तरमग्नेरुप

पत्ताप्यासप्रसङ्गात्, सिद्धिप्रतिबन्धकस्याऽनन्तरं सर्वानुव्यवसायानुमितेरप्यप्रसङ्गश्च । न च द्वितीयानुव्यवसायादिना ज्ञानाप्रमेयत्वपोक्तप्रामाण्यग्रहेऽपि स्वातन्त्र्येण तद्ग्रहात् स्वातन्त्र्येण तद्ग्रहायानुमानाश्रयणमावश्यकमिति वाच्यम्, अनुव्यवसाये स्वातन्त्र्येण प्रामाण्याप्रकारकतया स्वातन्त्र्येण प्रामाण्यग्रहेऽनुव्यवसायसामग्र्याः प्रतिबन्धकत्वकल्पनयैवोपपत्तेः तस्यैवाऽप्यस्य ज्ञानप्रामाण्यग्रहे क्षयोपशमविशेषहेतुत्वे लाघवमित्यस्मन्मतमेव युक्तम् । किञ्च तद्वद्विशेष्यकत्वावच्छिन्न तत्प्रकारकत्वमात्रमपि न प्रामाण्यं, संशयस्याप्युभयांशे तदभावप्रकारकत्वस्याप्यधिकस्य वेद्यत्वात्, अन्यथैतदंशे प्रमात्वेन भ्रमस्याप्यव्यावर्तनीयत्वप्रसङ्गात् तद्घटितस्य च प्रामाण्यस्य द्वयोः स्वतस्त्वपरतस्त्वयोरप्रामाण्यतुल्यकक्षत्वं युक्तिमत्, अपि च प्रामाण्यज्ञानं निश्चितास्था मतिज्ञानविशेषः, स च प्रामाण्यघटकयावत्पदार्थोपयोगादभ्यासदशायामास्कन्दति ज्ञाने स्वत एव, अन्यत्र तु परतोऽनुमानादिनेत्यनुत्कप्रकारकसन्दोहोत्पादस्यादेरपि प्रामाण्यस्य ज्ञप्तिस्वतीयशालिनां नानुपपन्ना, अस्तु वा सर्वत्र सर्वदा बाधकाभावपर्यालोचनया प्रामाण्यांशे स्वारसिकमेव ज्ञानम्, एकत्रापि ज्ञाने तद्विषयत्वावच्छेदेन ज्ञानजन्यत्वज्ञाना जन्यत्वाभ्यां परोक्षत्वप्रत्यक्षत्वयोरविरोधात्, बाधविषयापेक्षयैव प्रमितिमेतस्य तत्र तत्रोपपादितत्वादीदृशविज्ञानजन्येऽपाये च बाधविषये एतदपेक्षयोपस्थपर्याप्तिमतिज्ञानाजन्यत्वेनैव प्रत्यक्षत्वव्यवस्थितेरित्यधिकं मत्कृत–न्यायबिन्द्वादेरवसेयम् । कृतस्तस्योपप्लवसिद्धिरिति ( ४०–२–१० ) एकत्र प्रमितस्यैवान्यत्रारोपसम्भवादिति भावः । पराभ्युपगममात्रा पिति (४०–२–१०) परोपगतप्रमाणाजनितविकल्पादित्यर्थः, सर्वमवगतमिच्छतामिति (४१–१–५) जैनपिष्टनामि त्यर्थः, सर्वमिच्छन्तीति सर्वपस्तेषामिति व्युत्पत्तिसारस्यादेतदर्थलाभः, नैकप्रमाणवादिन इत्यादि ( ४१–१–१० )

नैकमपि प्रमाणं वदन्तीत्येवंशीला अनेकप्रमाणवादिन इत्यर्थः यस्या इति बहुसमर्थसमासोऽयं, तेनास्माद्यध्यापकयादिलाभः मतः इति द्रष्टव्यम् । तथाद्वैतमसिद्धेरिति ( ४१-१-११ ) स्वपक्षसाधने परपक्षदूषणे इति द्वैतप्रसिद्धेर्लोकाद्याधारादि- त्ययः । संपूर्णयेति (४१-१-१४) संपूर्णविषया तयेत्यर्थः । न परमार्थत इति (४१ १ १४) आविद्यकप्रमाणस्य पारमार्थि- कतत्साधनासमर्थत्वादित्यर्थः । परप्रमाणादीति, आदिना (४१-१-१४) प्रमाणपरिग्रहः, प्रमाणेतरेत्यादिना (४१-२-१) समाप्तलिङ्गकार्यलिङ्गकानुपलब्धिलिङ्गकानुमानत्रयविषयस्य चार्वाकाभिमतस्य प्रत्यक्षैकप्रमाणाभ्युपगमविरुद्धस्योत्कीर्ध नम्, तथोक्तवस्त्वभ्युपगमे प्रमाणान्तरस्यानुमानरूपस्य सिद्धेः प्रसङ्गात्, स्वयमिति ( ४१-२-४ ) परोपगमस्य स्वं प्रत्य प्रमाणत्वादिति भावः । अतिप्रसङ्गादिति (४१-२-५) अनुमानत्रयाभ्युपगन्तुरपि चार्वाकस्यैकप्रमाणवादित्वोक्तौ वैशेषि कादीनामपि तथात्वप्रसङ्गादित्यर्थः । यावान् कश्चिदिति ( ४१-२-७ ) अग्निजन्मेत्यनन्तरं भवतीत्युत्तरत्वं कथमनुपपन्न नीयम्, अनग्निजन्मेत्यनन्तरं न भवतीति योजनीयम्, चाकारो भिन्नक्रमस्त्वनुपरं योजनीयस्तेनान्वयव्यतिरेकव्याप्तिप्रतिप त्याकारद्वयप्रदर्शितं भवति, यथा श्रुते त्वग्निजन्मानग्निजन्मान्यतरतादात्म्याभयस्यनिषेधप्रतीतिस्तु दृश्या प्रसज्येतेति द्रष्टव्यम् । नन्वत्र व्याप्तिप्रतिपत्तेरेव प्रत्यक्षानुपलम्भप्रमितित्वेन वैलक्षण्यं साधनीयं तत्करणस्यैवोक्तस्य प्रमाणान्तरत्वसिद्धेः, तत्प्रदर्शने च यावान् कश्चिद्धूमः स सर्वो वह्नौ सत्येव भवति तस्मिन्नसति न भवतीत्येतावन्मात्रमेव भवतीति व्यर्थं जन्मपदमिति चेत्, न, धूमोऽस्तु वह्निर्मास्त्वित्यप्रयोजकत्वशङ्कानिरासद्वारा धूमो यदि वह्निव्याप्यो न स्यात् वह्निजन्यो न स्यादिति विचारपरिप्लवस्यैवो दस्य व्याप्तिप्रमापकत्वसम्भवात् तादृग्विचारोपनयनार्थं जन्मपदोपादानात्, एतेन प्रथम धूमस्यानुपलम्भ एकक्षणदनन्तरमभक्ष

इत्यात् सामान्यलक्षणाप्रत्यासत्तेः प्रत्यक्षहेतुतां कल्पयन्ति नैयायिकाः, सा च ज्ञायमानं सामान्यं, सामान्यज्ञानं वा, ज्ञानं च तदिन्द्रियजन्यं ग्राह्यं, स्मरणरूपस्य भिन्नेन्द्रियादिजन्यस्य च ज्ञानस्योत्तरकाले यावत्सामान्याश्रयप्रत्यक्षानुदयात्, तथा च घटत्वादिप्रकारतानिरूपितलौकिकान्यघटादिवृत्त्यविशेष्यताशालिचाक्षुषत्वावच्छिन्नं प्रति चक्षुष्प्रकारीभूतघटत्वत्वादिना घटत्वप्रकारकचाक्षुषत्वादिना वा हेतुता कल्प्यते, द्रव्यत्वादिसामान्यलक्षणाजन्यज्ञाने व्यभिचारवारणाय घटत्वादिप्रकारता-निरूपितत्वं विशेष्यतायां निवेशितम्, ज्ञानस्य घटत्वप्रकारकत्वनिवेशे तु घटत्वनिर्विकल्पकोत्तरोत्पन्ने सन्निकृष्टघटादौ घटत्वप्र-कारके द्रव्यत्वसामान्यलक्षणाप्रत्यासत्तिजन्ये चाक्षुषद्रव्यप्रत्यक्षे व्यभिचार इत्यतस्तदुक्तम्, न च तत्रासन्निकृष्टघटादावपि घटत्वमाने चाक्षुषप्रमापकत्वे लौकिकान्यवृत्त्यविशेष्यतासत्त्वात् यथोक्तेनाप्यनिर्वाह इति शङ्कनीयम्। घटत्वसामान्यलक्षणा कारणविरहादेव तत्रासन्निकृष्टघटे घटत्वमानासम्भवात्, तत्तद्घटादि विशेषणज्ञानादिमात्रेण घटत्वप्रकारकबुद्धेर्जनयितुमश-क्यत्वात्, घटत्वसामान्यलक्षणाजन्यघटज्ञानात्मकज्ञानलक्षणाजन्यघटलौकिकभिन्नप्रत्यक्षसमवितविशेषसामग्रीसहकृतविशेषण ज्ञानादीनामेव तत्र तज्जनकत्वात्, यथोक्तस्थले तादृशविशेषसामग्रीविरहेणोक्तापादनासम्भवात्, जातित्वादिना घटत्व विशेष्यकस्मरणानन्तरं यत्र द्रव्यत्वप्रकारकघटविशेष्यकचाक्षुषं तदुत्तरोत्पन्नद्रव्यप्रत्यक्षे घटत्वस्य प्रकारतया भानं नेष्यत एवेति नानुपपत्तिः, एवमिह घटे घटत्वमिति चाक्षुषानन्तरोत्पन्नद्रव्यत्वप्रकारकचाक्षुषोत्तरद्रव्यत्वसामान्यप्रत्यासत्तिजन्य ज्ञानस्थलेऽपि द्रष्टव्यम्। लौकिकान्यत्वस्य विशेष्यतायां निवेशान्निर्विकल्पाद्युत्तरोत्पन्नलौकिकप्रत्यक्षे न व्यभिचारः, न च यावद् घटविशेष्यत्वस्य कार्यतावच्छेदककोटिनिवेशयोग्यत्वात् किं लौकिकान्यत्वनिवेशेनेति वाच्यम्, तदनिवेशेऽपि

ज्ञापकविशेषेणैव यावद्घटमानोपपत्तौ तन्निवेशे प्रयोजनविरहात्, व्यभिचारवारणाय घटत्वव्यापकविषयताकत्वरू-पयावद्घटविशेष्यकत्वापेक्षया समोलौकिकान्यत्वस्यैव निवेशौचित्यात्, यावद्घटादिरूपसामान्यलक्षणास्थले यावच्च-दाभयविषयकलौकिकस्यापि सम्भवेन तन्निवेशप्रयोज्याय, मुख्यत्वनिवेशात् घटत्वादिप्रकारकस्मरणादिजन्यघटोपनीतभा-नाशे न व्यभिचारः, बहिरिन्द्रियजन्ये उपनीतमाने उपनीतस्य विशेषणतयैव भानान्मुख्यत्वस्य च प्रकारतान्यत्वात्म-कत्वात्, घटत्वादिविषयकनिर्विकल्पकानन्तरं यावद्घटप्रत्यक्षानुदयात् कारणतावच्छेदककोटौ प्रकारत्वनिवेशः, एकसम्बन्धेन सामान्यप्रकारकज्ञानादन्यसम्बन्धेन सामान्याश्रयप्रत्यक्षापत्तिवारणाय तत्सम्बन्धेन सामान्याश्रयप्रत्यक्षहेतुतायां तत्सम्बन्धावच्छिन्नप्रकारता निवेशनीया । अत्र प्रथमकल्पे कारणतावच्छेदकप्रत्यासत्तिः समवायादिः, कार्यतावच्छेदकप्रत्यासत्तिश्च विषयता, घटादिज्ञप्तिविषयतात्वेन सम्बन्धत्वाभ्युपगमाच्च न समूहालम्बने व्यभिचारः । एकपुरुषीयसामान्यज्ञानादन्यपुरुषीयसामान्याश्रयप्रत्यक्षवारणाय ज्ञानांशे तत्पुरुषीयत्वं निवेश्यम्, इत्थं च पुरुषभेदेनापि कारणताभेदः, द्वितीयकल्पे कार्यस्य कारणस्य च समवाय एव प्रत्यासत्तिरतो नैकपुरुषीयसामान्यज्ञानादन्यस्य सामान्याश्रयप्रत्यक्षप्रसङ्गः । अत एवैतत्कल्पे पुरुषभेदेन कारणताभेदाभावात्पूर्वकल्पापेक्षया लाघवं, न चात्र सामान्यानां विशिष्य निवेशनीयतया गौरवं मतपक्षे तु लौकिकान्यमुख्यविशेष्यतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति प्रकारतासम्बन्धेन चाक्षुषादिमत्त्वनैकहेतुताकल्पनयै-वोपपत्तौ न सामान्यभेदेन कारणताभेद इति लाघवम्, पुरुषापेक्षया च विषयाणां बहुतरतया सामान्यभेदेन कारणताभेद-कल्पनस्यैव पुरुषभेदेन कारणताभेदकल्पनापेक्षया गुरुत्वादिति वाच्यम्, सामान्यधर्माणां विशिष्यानिवेशे द्रव्यत्वप्रकारक-

तेरेव तथात्वे तापत्तिरिति ध्येयम्, न चोक्तसम्बन्धेन चाक्षुषाधिकरणे तदव्यवहितप्राक्क्षणावच्छेदेन प्रकारतासम्बन्धेन चाक्षुष
रूपकारणाभावात्कथं तत्र तदुत्पत्तिस्तत्क्षणस्यातीतनिष्ठप्रकारतासम्बन्धावच्छिन्नज्ञानरूपकारणाधिकरणतानवच्छेदकत्वादिति
वाच्यम्, विषयतासम्बन्धावच्छिन्नाधिकरणताया अधिकरणासम्बद्धकालस्याप्यवच्छेदकत्वाभ्युपगमात्, अन्यथा ज्ञानेच्छादीनां
विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावविलयप्रसङ्गात्, अथवा प्रकृतस्थलेऽवच्छेदकत्वमनन्तर्भाव्य यत्र प्रदेशे यत्क्षणाव्यवहित
पूर्वक्षणवृत्तिचाक्षुषादिरूपं कारणं प्रकारतासम्बन्धेन वर्तते तत्र तत्क्षणवृत्तिचाक्षुषादिरूपं कार्यं प्रकारतासम्बन्धेनोत्पद्यत
इत्येवं सामग्रीव्याप्तिरभ्युपगम्यत इति नानुपपत्तिः। अथ विनश्यदवस्थसन्निकर्षजन्यसामान्यप्रकारकचाक्षुषानन्तरं
सामान्यप्रत्यासत्तिजन्यचाक्षुषापत्तिः, स्वाश्रयविशेष्यतानिरूपितसामान्यप्रकारकत्वसम्बन्धेन चक्षुःसंयोगविशिष्टचाक्षुषत्वा
दिनात्मनिष्ठप्रत्यासत्त्या स्वाश्रयविशेष्यतानिरूपितत्वसम्बन्धेन चक्षुःसंयोगविशिष्टप्रकारतात्मकविषयनिष्ठप्रत्यासत्त्या चाक्षु
षत्वादिना च हेतुत्वेऽपि यत्र धूलीपटलादिविशेष्यकधूमत्वादिप्रकारकभ्रमो दोषनाशश्च युगपत्तत्र तदुत्तरक्षणे धूमप्रत्यक्षापत्तिः
तत्सामान्याश्रयीभूतस्वाश्रयविशेष्यतानिरूपिततत्सामान्यप्रकारताकत्वसम्बन्धेन चक्षुःसंयोगाद्यविशिष्टचाक्षुषत्वादिना
समानाधिकरणवृत्तित्वस्वाश्रयविशेष्यतानिरूपितत्वोभयसम्बन्धेन चक्षुःसंयोगाद्यविशिष्टप्रकारतासम्बन्धेन चाक्षुषत्वादिना
वा हेतुत्वकल्पने तु धूलीपटलादिविशेष्यकधूमत्वादिभ्रमाद्दोषादिसत्त्वकालेऽपि यावद्धूमत्वाश्रयप्रत्यक्षानुदयप्रसङ्गः
दोषादिवैशिष्ट्यं निवेश्य हेत्वन्तरकल्पने तु व्यभिचारवारणमशक्यमिति चेत्, न, सामान्यप्रत्यासत्त्या सामान्यप्रकारता
निरूपितलौकिकविशेष्यताशून्यचाक्षुषादीनां कुत्राप्यजननात् तादृशविशेष्यताशालिचाक्षुषसामग्रीसहकारेणैव सामान्य

घटसामान्यमिति प्रत्यक्षं तदन्तर्भावापत्त्यप्रसङ्ग विचाराधीन इति विचारकधीकत्वात् सामान्यप्रत्यासत्तेरसत्त्वमायातं, वस्तुतस्तस्या यावदाश्रयज्ञाने द्वित्वादावपेक्षाबुद्धेरिव वैजात्येनैव हेतुत्वमुचितमिति तस्या एवोद्धारकस्य प्रमाणान्तरत्वं च युक्तिमत्, एतेन, स्मरणादिसाधारणसामान्यविषयकज्ञानत्वेनैव हेतुता सामान्यप्रकारकप्रत्यक्षत्वेन कार्यता, स्मरणादिस्थलेऽपि सामान्याश्रयप्रत्यक्षमिष्टमेव, सामान्यप्रत्यासत्तिजन्यत्वानुपपत्तौ सामान्यप्रकारकलौकिकत्वानुपपत्त्या आवश्यकत्वात् द्वितीयपक्षे सामान्यप्रकारकत्वानुपपत्त्या तृतीयपक्षे यावत्सामान्याश्रयप्रत्यक्षस्य भवतोऽप्यावश्यकत्वात् सामान्यप्रकारकत्वेन कारणत्वमनादृत्य द्वितीयपक्षे तदुत्पादाभ्युपगमे क्षतिविरहात्, एवं निर्विकल्पोत्तरमपि यावत्सामान्याश्रयप्रत्यक्षमिष्टमेव । द्वितीयपक्षे विशिष्टबुद्ध्युत्पत्त्या तृतीयपक्षे तदुत्पादाभ्युपगमस्य भवतोऽप्यावश्यकत्वात्, न च सामान्यविषयकज्ञानत्वेन हेतुत्वे विषयतात्वेन प्रकारतासम्बन्धतादीनामवच्छेदकत्वापेक्षया प्रकारतात्वेन प्रकारतामात्रस्यैव तथात्वमुचितमिति वाच्यम्, सामान्यप्रकारकज्ञानत्वेन हेतुत्वे लौकिके उपनीतभाने च व्यभिचारवारणाय लौकिकसन्निकर्षजन्यविशेष्यतायाः कार्यतावच्छेदककोटौ दाने गौरवात्, तदपेक्षया कारणतावच्छेदककोटौ विषयतात्वेन निवेशस्यैवोचितत्वादित्यादि नवीनोक्तमप्यपास्तम्, निर्विकल्पकस्याविचारकत्वेनाप्रत्यासत्तित्वात् सामान्यविषयकज्ञानत्वेन हेतुत्वायोगात्, एकसम्बन्धेन सामान्यविषयकज्ञानात् सम्बन्धान्तरेण सामान्याश्रयप्रत्यक्षाभ्युपगमस्यानुभवविरुद्धत्वेन तद्वारणाय सम्बन्धविशेषावच्छिन्नविषयतानिवेशध्रौव्ये निर्विकल्पकग्रहायोगाच्च, किञ्च निर्विकल्पकस्य प्रत्यासत्तित्वे घटत्वप्रत्यक्षकाले द्रव्यत्वसत्त्वादीनामपि प्रत्यक्षस्यावर्जनीयत्वात्, घटत्वनिर्विकल्पकद्वितीयक्षणे यावद्घटप्रत्यक्षवत् यावद्द्रव्यप्रत्यक्षस्य यावत्सत्प्रत्यक्षस्य चापत्तिः, सा चानिष्टेति, यस्य यावत्सामा

न्यत्वं द्रव्यत्वादिरिक्तेनोच्यते चक्षुर्ज्ञानाधारद्रव्यत्वक्रियाविषयविशेषारम्भिका प्रतिपत्तव्या, न चेद् एवं तदा ज्ञायमानात् सामा
न्यात् यावत्तदाश्रयस्यैव ज्ञायमानविशेषात् यावत्तदाश्रितस्यापि ग्रहणप्रसङ्गस्याभ्युपगमेन सामान्यलक्षणापरिच्छेदलक्षणापि
प्रत्यासत्तिपदवीमासादयेत्, न च तत्र विशेषस्य सामान्यनाममात्रकरणेनापि निस्तारः, पर्यवसानमुत्क्रान्तानामर्थानां
यथोत्तरं युक्तिभावेन स्वलक्षणमात्रविभान्तप्रतीतौ प्रत्यासत्त्यन्तरकल्पनापत्तेः। एवं घटादावपि भेदाभेदादिविचारे निर्वि
कल्पपर्यवसाने द्रष्टव्यम्। उभयत्वापारोपगमे तु न कुत्रापीदृशस्थले विचारणीयमस्ति। अत्र फलीभूतबोधापलापे तु सामान्य
प्रत्यासत्तिवत्बोधोऽपीयत्करादष इति ध्येयम्। इदमप्यत्र वदन्ति, निर्विकल्पकसाधारणसामान्यज्ञानस्य प्रत्यासत्तित्वमते
ज्ञानप्रत्यासत्तेर्हेतुत्वे मानाभावः। घटो नास्ति सुरभि चन्दनमित्यादौ घटसौरभादीनां घटत्वसौरभत्वसामान्यलक्षणप्रत्या
सत्तिबलादेव भानोपपत्तेः। न च सामान्यप्रत्यासत्त्या फलजनने किञ्चिदंशे सामान्यप्रकारकज्ञानसामग्र्यन्तरस्यापेक्षितत्वादुप
गाप्यम्, तत्र सामान्यज्ञानविषया घटादिप्रकारकप्रत्यक्षजनकघटादिज्ञानघटितोपनीतभानसामग्र्या एव सत्त्वात्। ज्ञान
लक्षणायाः पृथग्धेतुत्व एव विवादात् घटसामान्यलक्षणाया अपि च प्रकृतघटत्वादिसामान्यलक्षणातिरिक्ततया सामग्र्यन्त
रतोपपत्तेः, घटत्वसौरभत्वादिसामान्यलक्षणाप्रत्यासत्तेरन्यथासम्भवेऽपि घटत्वसौरभत्वादिविषयता निषिध्यते ननु
तदाश्रयविषयतेति तदुभयविषयकज्ञानाभावेन तथा तज्ज्ञानानिर्वाहाय तदंशमपि ज्ञानलक्षणा कल्प्यते, न च रजतत्वादिना शुक्त्या
उपनीतमानानुरोधेन ज्ञानलक्षणप्रत्यासत्तेः पृथक्कारणत्वकल्पनमावश्यकं, तत्र शुक्तित्वविषयकज्ञानाभावेन सामान्यलक्षणातस्तद्

निर्वाहादिति वाच्यम्, रजतत्वसामान्यलक्षणाया रजतत्वाश्रयप्रत्यक्षं प्रत्येव हेतुत्वेऽपि शुक्तेरपि पैशानिकसम्बन्धेन रजतत्वाश्रयत्वात् तद्बलादेव तज्ज्ञानोपपत्तेः, वस्तुतो दोषादिरूपकारणबलादेव तत्र शुक्तिभानमिति न तदनुरोधेन ज्ञानप्रत्यासत्तिहेतुताकल्पनं, न चैवं रजतत्वभाने शुक्तेर्भानेऽपि दोषादिबलादस्योपनीतमानापत्तिः, दोषस्य फलबलकल्प्यतया फलाभावेन तत्र दोषाकल्पनात्। न च ज्ञानलक्षणायाः पृथग्हेतुत्वे घटत्वविशेष्यकज्ञानदशायां घटज्ञानाद्यसत्त्वेऽपि घटत्वादिना घटादिमुख्यविशेष्यकमानसोपनीतमानापत्तिः, घटत्वादिसामान्यलक्षणायाः किञ्चिदंशे घटत्वादिप्रकारकज्ञानसामान्यान्तरसहकृताया एव फलहेतुत्वेन तत्र तदन्यज्ञानाभावादेवापत्तेः कर्तुमशक्यत्वादिति वाच्यम्। एवमपि लौकिकान्यतद्विषयताशालिज्ञानत्वावच्छिन्नम्प्रति तद्विषयकज्ञानत्वेनैव हेतुताकल्पनेनैवोपपत्तौ ज्ञानप्रत्यासत्तिसामान्यप्रत्यासत्त्योः पृथक्कारणत्वे मानाभावात्, न च सामान्यप्रत्यासत्तिजन्याज्ञातसामान्याश्रयप्रत्यक्षे व्यभिचारः, अव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशे तदभावात्, न च घटत्वांशे लौकिकत्वावच्छिन्नघटभानस्य लौकिकान्यघटत्वविषयताशून्यत्वेन तत्र घटत्वादिज्ञानस्य पृथग्घेतुत्वकल्पनमावश्यकम् एककारणतया निर्वाहाभावादिति वाच्यम्। तत्र घटत्वांशे द्विविधविषयतास्वीकारे दोषाभावात् अव्यवहितोत्तरत्वनिवेशेनैव लौकिकज्ञाने व्यभिचाराभावेन लौकिकान्यत्वानिवेशाच्च, न चाज्ञातव्यक्तिभानाय सामान्याश्रयविषयतामन्तर्भाव्य सामान्यज्ञानस्य हेतुत्वान्तरमावश्यकमिति वक्तव्यम्, सामान्यज्ञानजन्यतावच्छेदककोटौ सामान्याश्रयविषयताया अनिवेशेऽपि तद्विषयकप्रत्यक्षेच्छाविरहविशिष्टविरोधिसामग्र्यभावजन्यतावच्छेदककोटौ तत्सामान्याश्रयविषयतानिवेशात् तद्बलादेव सामान्यप्रत्यासत्तिजन्यज्ञानस्य निखिलसामान्याश्रयविषयकत्वोपपत्तेः, न च सामान्यज्ञानशून्यकालेऽपि तादृशकारणबला

पत्त्यापत्तिः, तज्जन्यफलस्य सामान्यज्ञानजन्यतावच्छेदकाक्रान्ततया सामान्यज्ञानं विना तदापत्त्यसम्भवादिति, अथाप्यपक्वार्क
मनीषोन्मेषः, यावत्सामान्याश्रयज्ञाने बाधाभावसामान्यज्ञानयोर्नियमतः सहकारित्वे कल्पनीये सर्वत्र प्रमाणे बाधाभावमुप-
प्रेक्षितेऽपि तदपेक्षा स्यात्, न चैवमभ्युपगमः, किन्तु सर्वप्रमाणानां सामान्यविषयत्वमुत्सर्गतः स्वसामग्रीबलायातमित्येवाभ्युपगम
इति । तस्मात् सामान्यज्ञानं यदेकव्यक्तिविषयं स्यात्तदभावेन मानव्यक्तिविषयं स्यादित्युदाहरणक्रमेण यावत्सामान्याश्रय
ज्ञानमङ्गीकर्तुं युक्तम्, तेनैव व्याप्तिग्रहविशेषस्याप्यादिज्ञानानां सामान्यविषयत्वादनुमितिशाब्दादीनां सामान्यविषयत्व
सङ्गतेर्व्याप्तिज्ञानादीनां तर्कानुग्राहकत्वकल्पनापेक्षया तत्तत्कल्पनायामेव लाघवात्, एवं सामान्याश्रयप्रत्यक्षत्वं न परमतेऽपि
सामान्यज्ञानजन्यतावच्छेदकं, तैरीश्वरप्रत्यक्षोपगमेन तत्र व्यभिचारात्, किन्तु सामान्याश्रयजन्यप्रत्यक्षत्वमिति, तदपेक्षया
सामान्याश्रयवर्त्त्यमेव तथा लाघवादित्यस्मन्मतमेव न्याय्य इति बोध्यम्, यावत्सामान्याश्रयपूर्वं विना बाधाभावमात्रेण यदि
यत्किमानोपगमे तु नियमेन सर्वज्ञानन्त्यपर्यायमानापत्तिः, एतेनानुमितौ पक्षतावच्छेदकावच्छिन्नत्वं पक्षतावच्छेदकव्याप्तिविष-
यताकत्वं बाधाभावमात्रादित्यपि निरस्तम्, उक्तन्यायानुसारेणैव तत्र नियतविषयमानादन्यथातिप्रसङ्गात्परामर्शेऽपि तज्ज्ञाने
कारणस्य मृग्यत्वादिति दिग् । एतेन यदि च तत्प्रत्यक्षविषयतायाः कारणतावच्छेदकसम्बन्धेन सन्निकर्षाश्रयत्वनियतत्वं
प्रामाणिकं तदा ज्ञानप्रत्यासत्तिसामान्यप्रत्यासत्त्योः पृथक्कार्यकारणभावकल्पनमावश्यकं, तथाहि—एतन्मते सामान्यलक्षणायाः
स्वविषयीभूततत्सामान्यप्रकारकप्रत्यासत्त्या ज्ञानत्वेन तत्सामान्याश्रयवृत्तिविषयतया प्रत्यक्षस्यावच्छिन्ने हेतुता कल्प्या, तथा च
घटो नास्ति सुरभि चन्दनमित्यादौ घटत्वसौरभत्वविषयकज्ञानाभावेन सामान्यलक्षणया तज्ज्ञानानुपपत्तेर्लौकिकसन्निकर्षविषयतया

प्रत्यक्षत्वावच्छिन्ने विषयतया ज्ञानत्वेन ज्ञानप्रत्यासत्तेर्हेतुत्वकल्पनमावश्यकम्, न च निर्विकल्पकसाधारणप्रत्यासत्तिमते सामान्यलक्षणाया हेतुत्वे वस्तुगत्या न निषध्यते, विशेषणज्ञानविरहेणैवाऽन्यदीयघटज्ञानात् घटत्वेन घटप्रत्यक्षवारणसम्भवात्, इत्थं च घटो नास्तीत्यादावन्यत्र ईश्वरीयघटत्वादिशुचिधर्मज्ञानादेवोपपत्तौ किं ज्ञानप्रत्यासत्तिकल्पनया, 'सामान्यज्ञानहेतुतायां वस्तुगत्यादिनिवेशे व्यभिचारविरहेण सामान्यप्रकारकत्वस्य अन्यथावच्छेदककुक्षावप्रवेशात्,' सामान्यप्रत्यासत्तिजन्ये घटत्वांशे घटत्वादिशुचिसामान्यधर्माप्रकारकत्वेऽपि दोषाभावादिति वाच्यम्, सामान्यलक्षणायाः फलजनने तत्सामान्यप्रकारकप्रत्यक्षजनकसामग्र्यन्तरस्य सहकारित्वाभ्युपगमादुपदर्शितस्थले घटत्वादिशुचिसामान्यप्रकारकप्रत्यक्षजनकसामग्रीविरहेण घटत्वादिमानस्य सामान्यलक्षणयाऽनुपपत्तेर्ज्ञानलक्षणायाः पृथगारम्भस्यावश्यकत्वात्, इत्थमेव घटोपस्थितिशून्यकाले घटत्वविशेष्यकज्ञानाच्च घटत्वेन घटवृत्त्यविशेष्यकं मानसमित्युपपद्यते, यत्तु उपदर्शितनियमानुरोधेन विषयतया प्रत्यक्षत्वावच्छिन्ने स्वविषयधर्मवत्त्वसम्बन्धेन विषयतासम्बन्धेन वा ईश्वरज्ञानसाधारण्येन ज्ञानत्वेनैकमेव हेतुत्वं, न चैवं घटत्वज्ञानदशायां तदनाश्रयप्रत्यक्षापत्तिः, घटत्वेन तज्ज्ञानस्य दोषविरहेणानापत्तेः, सति दोषे चेष्टत्वात्, तदनाश्रयवृत्तिधर्मप्रकारकज्ञानस्य च साध्यविशेषज्ञानसाध्यस्य तद्विरहेणैवायोगादिति, तन्न, उपदर्शितैकहेतुहेतुमद्भावे घटत्वाद्यात्मकयत्किञ्चिद्विशेषणज्ञानसहकृतस्यैव 'सामान्यज्ञानस्य फलव्याप्यत्वेन यत्किञ्चित्सामान्यज्ञानदशायां प्रमेयमात्रे 'विषयतया प्रत्यक्षापत्तेर्दुर्वारत्वात्, 'सामान्यभेदेन विविच्य हेतुत्वे 'च तत्सामान्यज्ञानाद्यदनाश्रयप्रत्यक्षानापत्तेः, ईश्वरीयप्रमेयत्वादिसामान्यज्ञानाद्यज्ञानशून्यस्य च यत्किञ्चिद्व्यतिरिक्तसामान्यज्ञानतो विश्वविषयकप्रत्यक्षापत्तेश्च, प्रमेयत्वादिसामान्यलक्षणायाः

कत्वेनेन प्रमेयत्वादिरूपविशेषणज्ञानस्यैव सहकारित्वेन निरसनीयत्वादिति, घटत्वादिना यत्किञ्चिद्धर्मिमात्रकलौकिकसन्नि-
कर्षादिशून्यकाले घटत्वादिसामान्यलक्षणाजन्यप्रत्यक्षानुदयाच्च तत्सामान्यधर्मप्रकारेण यत्किञ्चिद्धर्मिविषयकप्रत्यक्षजनकसाम-
ग्यन्तरस्य सामान्यलक्षणासहकारित्वं स्वीकरणीयम्, तच्च लौकिकप्रत्यक्षसामग्री उपनीतभानसामग्री च, तयोश्च प्रत्येकं सहका-
रिता बोध्या, सा च तदन्यतावच्छेदकसमानाधिकरणमन्यतावच्छेदकत्वरूपा, न चैवं कश्चिदापत्तिः सम्भवति, यतः तद्व्यक्तिस-
न्निकर्षयत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकीभूता यावन्तो धर्माः प्रत्येकं तदवच्छिन्नस्योभयात्मकसामग्र्यास्त-
समावच्छिन्नाभावकत्वात्, घटत्वाश्रयस्य यस्य कस्यचिल्लौकिकसामग्र्युपनीतभानसामग्र्योरसत्त्वेऽपि तादृशसामग्र्येव नास्ति,
च॰ तत्प्रकारकप्रत्यक्षत्वावच्छिन्नस्य घटत्वादिप्रकारतानिरूपितलौकिकविषयताशालितया घटत्वादिनोपनीतयत्किञ्चिद्धर्मिविष-
यतया च द्विविधत्वात्, यत्किञ्चित्त्वेन प्रथमोपादाने तद्भिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नस्योभयात्मकलौकिकस-
न्निकर्षादिरन्त्यस्य चोपादाने तद्भिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नोपनायकज्ञानादेरभावेन तत्र तद्घटिततादृशस्तो-
माभाव इति न कश्चिदनुपपत्तिः। अथ घटो नास्ति सुरभि चन्दनमित्यादौ यावद्घटसौरभादिभानापत्तिः, यावद्घटादिविषयक-
प्रत्यक्षत्वस्य सामान्यज्ञानजन्यतानवच्छेदकत्वेन तदवच्छिन्नापत्तेः कर्तुमशक्यत्वेऽपि सामान्यप्रत्यासत्तिफलादर्शितो यावद्घट
विषयकप्रत्यक्षापत्त्युद्धारत्वात्, घटत्वेन यत्किञ्चिद्विषयकलौकिकप्रत्यक्षसामग्रीदशायां यावन्तो घटा भासन्ते न तु घटो नास्ती
त्यादाविति च नियामकस्याभावस्य वक्तव्यत्वादिति चेत्, न। घटत्वादिप्रकारतानिरूपितमुख्यविशेष्यताशालिप्रत्यक्षत्वस्य घटत्वा-
दिसामान्यलक्षणाजन्यतावच्छेदकत्वे दोषाभावात्, तदवच्छिन्नफलस्य बहिरिन्द्रियजन्यस्य मानसस्य वा द्विविधस्यापि घट इत्या

कारकस्यैवोपगमात्, यत्तु घटत्वप्रकारतानिरूपितलौकिकविषयतया घटत्वज्ञानजन्यतावच्छेदककोटौ निवेशाद् घटो नास्ती त्यादौ घटाभावे लौकिकसन्निकर्षघटितसामग्र्यभावान्नोक्तापत्तिः, ज्ञातघटादिज्ञाने च ज्ञानलक्षणाया एवेति, तदसत्, घटत्वादिप्रकारतानिरूपितलौकिकविषयतया जन्यतावच्छेदककोटौ निवेशने सामान्यलक्षणाजन्यघटादिज्ञानसाङ्कर्यात्, अथ सामान्य-घटितसामग्रीव्याप्तौ घटत्वादिप्रकारकलौकिकप्रत्यक्षसामग्र्यादेस्तादृशसामग्रीत्वेन घटचक्षुःसंयोगत्वादिना वा न निवेशः, तादृशधर्माणां कारणतानवच्छेदकत्वात्, कारणतावच्छेदकधर्मावच्छिन्नस्य सामग्रीव्याप्तिमध्ये निवेशनेनातिप्रसङ्गवारणे सर्वमतसिद्धचाक्षुषत्वरूपकार्यकारणभावविलयप्रसङ्गात्, तथा चालोकसंयोगावच्छिन्नचक्षुःसंयोगत्वादिनैव लौकिकप्रत्यक्षादिहेतवः सामग्रीव्याप्तिमध्ये निवेशनीया इति तादृशचक्षुःसंयोगादिसमवहितं घटत्वादिज्ञानं यदा यत्र कारणतावच्छेदकप्रत्यासत्त्या तदव्यवहितोत्तरक्षण तत्र कार्यमित्येवादृशी सामग्रीव्याप्तिः स्वीकार्या, तत्र चक्षुःसंयोगादिसमवहितत्वमेकक्षणवृत्तित्वसम्बन्धेन, नत्वेकदेशवृत्तित्वसम्बन्धेन, स्वविषयीभूतसामान्याश्रयत्वप्रत्यासत्त्या सामान्यज्ञानहेतुतामते तादृशसम्बन्धेन घटत्वज्ञानादीनां घटचक्षुःसंयोगादिसमानदेशतासम्भवेऽपि पटादौ घटत्वादिभ्रमजनकदोषकाले घटत्वादिज्ञानेन चाक्षुषघटादिचाक्षुषजननादेकदेशवृत्तित्वनिवेशासम्भवात्, एवं च दोषाभावेऽपि पटादिचक्षुःसंयोगमादाय चक्षुःसंयोगादिकालवृत्तित्वविशिष्टसामान्यज्ञानमहिम्ना घटत्वादिज्ञानकार्योत्पत्तिः, घटचक्षुःसंयोगदशायां व्यभिचारेण सामग्रीव्याप्तौ दोषनिवेशस्याप्यसम्भवादिति चेत्, न। बाधाभावादिघटितसामग्रीव्याप्तावप्यस्य दोषस्य तुल्यत्वात्, तत्रापि घटाभावादिप्रकारकचाक्षुषनिश्चयाभावादिघटितसामग्रीव्याप्तौ सन्निकर्षादीनां घटचक्षुःसंयोगत्वादिना निवेशासम्भवाच्चक्षुःसंयोगत्वादिनैव तेषां निवेशनीयतया घटा

दिचक्षुःसंयोगादिक्षणे भिन्न चक्षुःसंयोगादिकं तदन्यतावच्छेदकीभूतघटादिप्रकारकचाक्षुषत्वावच्छिन्नापत्तेः । अथ घटवृत्त्यादिवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति तादृशसम्बन्धेन घटज्ञानसाधारणज्ञानत्वेन हेतुता कल्प्यते, तथा च घटवृत्तिविषयत्वसमवायान्यतरनिरूपकतावच्छेदकत्वस्य सविषयकत्वसामानाधिकरण्यसम्बन्धेन तादृशज्ञानविशिष्टचक्षुःसंयोगाद्या त्मकविषयवृत्तिसामग्रीसमवहितभवमानचाक्षुषत्वावच्छिन्नस्यैव घटचाक्षुषत्वादिरूपकार्यतावच्छेदकावच्छिन्नव्याप्यत्वमभ्युपेयते, चक्षुःसंयोगादीनां च घटवृत्तिविषयतासम्बन्धेन ज्ञानाधिकरणेऽवर्तनं तत्समवहितचाक्षुषाभावादिबलात् घटचाक्षुषापत्ति रिति चेन्, तुल्यं मतान्तरेऽपि, न च घटे घटत्वभ्रमजनकदोषसध्रीचीनघटचक्षुःसंयोगकाले घटत्वसामान्यलक्षणाजन्यचाक्षुषोदयात् घटावृत्तिविषयतासमवायघटितसामानाधिकरण्यसम्बन्धेन ज्ञानविशिष्टचक्षुःसंयोगाधारकसामग्रीसमवहितघटत्वज्ञानस्यापि व्याप्याप्यारोपगमकीभूतदोषादिविरहकालेऽपि सतो घटत्वसामान्यलक्षणाजन्यज्ञानापत्तिः, तादृशस्थले दोषस्यापि निवेशात्, न चैवं घटत्वादिकसामान्यलक्षणप्रत्यासत्तिघटितसामग्र्याश्च घटपटादिभेदेनानन्त्यात् गौरवमिति वाच्यं, तादृशगौरवस्य गत्यन्तराभावेनाकिञ्चित्करत्वात्, यद्वा, स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन कृतिविशिष्टघटत्वप्रकारतानिरूपितलौकिकविषय ताशालिप्रत्यक्षमात्रमात्रत्वेन घटत्वादिप्रकारतानिरूपितमुख्यविशेष्यताशालिमानसान्यप्रत्यक्षं प्रति हेतुतारूपनियमस्यावश्या कल्प्यते, यतो नास्तीत्यादिप्रत्यये व्यभिचारवारणाय मुख्यविशेष्यताया घट इत्याकारकमानसे च तद्वारणाय मानसान्यत्वस्य निवेशः । तादृशसम्बन्धेन कृतिविशिष्टभोक्तृभागमात्रः प्रतियोग्यन्यतरविषयकत्वेन एव वर्तते इति नातिप्रसङ्गः, इत्थं चैककारम-

निरस्तम्, तत्तत्प्रत्यक्षविषयतायाः कारणतावच्छेदकसम्बन्धेन सन्निकर्षाभयत्वनियमस्य चक्षुरप्राप्यकारितावादिभिरस्माभिर
नभ्युपगमात्, तदनुरोधेन सामान्यप्रत्यासत्तेः पृथक्कारणत्वे मानाभावात्, घटत्वादिप्रकारतानिरूपितमुख्यविशेष्यताशालि
प्रत्यक्षत्वस्य घटत्वादिसामान्यलक्षणाजन्यतावच्छेदकत्वे यो धूमवान् सोऽग्निमानित्यत्र तादात्म्येन व्याप्तिग्रहोच्छेदापत्ते,
धूमत्वसामान्यलक्षणया धूमवदुपसर्जनीभूतसकलधूमप्रकारयोगाद् धूमव्यक्तीनां च पृथगननुगतत्वेन ज्ञायमानधूमसामान्यलक्षणया
सकलधूमवदुपस्थित्ययोगात्, परम्परासम्बन्धेन धूमत्वसामान्यभानस्वीकारे च यो धूमत्ववानिति प्रयोगापत्तेः, न च प्रत्य
क्षत्वं सामान्यप्रत्यासत्तिजन्यतावच्छेदकं कार्यकारणभावादित्याश्रितमेव, तस्मात् सामान्यावच्छिन्नविशेषविषयकप्रत्यक्षादौ
सामान्यावच्छिन्नविशेषालम्बनस्य विशेषावच्छिन्नसामान्यविषयकप्रत्यक्षादौ विशेषावच्छिन्नसामान्यालम्बनस्योद्दस्य हेतुत्वमव
श्यमेष्टव्यमिति, तत एव कार्यसिद्धे किं सामान्यघटितसामग्रीव्यासौ घटत्वप्रकारतानिरूपितलौकिकप्रत्यक्षसामग्र्यादेर्दोषविशे
षादेरुपनीतमानसामग्र्यादेश्च निवेशेनाप्रामाणिकगौरवकारिणा, स्ववृत्तिप्रतियोगिकत्वसम्बन्धेनत्यादिकल्पे तु लाघवात् घटत्व
प्रकारकज्ञानत्वावच्छिन्नं प्रति स्ववृत्तियोगिताकत्वसम्बन्धेन कृतिविशिष्टप्रागभावस्य स्वप्रतियोग्युपयोगसम्बन्धेनैव हेतुत्वसम्भवे
समस्तं मानसान्यत्वादेः कार्यतावच्छेदककोटौ निवेशेन, सामान्याभयलौकिकप्रत्यक्षसामग्र्यभावेऽपि सामान्येनोत्सर्गतो यावद्वि
शेषाश्रयेण भवितव्यमित्यूहकाले यावत्सामान्याश्रयज्ञानस्य सर्वसिद्धत्वात्, वस्तुत ऊह इत्यादिप्रतीतिसिद्धवैजात्यशालिज्ञाने
स्वाश्रयोज्ज्वलविजातीयोपयोगसम्बन्धेन सामान्यप्रत्यासत्त्यादिस्थानीयतद्विचाराणां हेतुत्वात्न काचिदनुपपत्तिः, घटादौ चरमसंयो
गस्येव ज्ञाने विजातीयोपयोगस्य चरमकारणत्वात्, अन्यहेतूनां सहकारकतयैव हेतुत्वोपगमादिति, इत्थं चैतदपर्यं तद्विचार

फलीभूतमद्वैतनिष्पमभ्युपगन्तव्यम्, यतः सर्वोपसंहारेण व्याप्त्यादिग्रह, नो चेत्, सामान्यप्रत्यासत्त्या यावद्धूमध्वजयोरुपस्थित्यभ्युपगमेऽपि यावत्त्वेनोपस्थितिः कुतः, नहि धूमत्वमेव धूमनिष्ठं यावत्त्व, धूमवान् यावद्धूमवानित्यनयोरविशेषप्रसङ्गात्, तथा च यावान् धूमस्तावान् वह्निजन्मस्पर्धप्रतिपत्तये ऊहप्रमाणमेव शरणं, सामान्यव्यभिचाराद्यनुपस्थितिसहकारेण विशेषसहचारग्रहस्य यावद्धूमो यावत्त्वाद्यव्याप्तिनिश्चायकत्वमपि तत्त्वेन ग्रहं विनाऽव्यवस्थितमिति, तद्ग्रहे चोहप्रमाणं विना नान्यस्य व्यापार इत्याद्यन्यदपि विभावनीयमवहितमानसैः, " सामान्यलक्षणप्रत्यासत्तिप्रत्यर्थिनिर्दलनात् । एवमूहप्रमाणस्य राज्यं निष्कण्टकं स्थितम् " ॥ १ ॥ अथ प्रकृतम्, एवं तीर्थकृत्समयानां परस्परविरोधेन प्रमाणकत्वघातस्याभावं प्रसाध्य स्वस्य शासनस्याविरोधाभ्युपगमेऽपि प्रमाणकत्वाभावेन तं प्रसाधयितुमाह–' यदि पुनरित्यादिना ' ( ४२–१–१ ) संविदद्वैतादीनामिति ( ४२–१–२ ) अत्रादिपदेन चित्राद्वैतपरमब्रह्माद्वैतशब्दब्रह्माद्वैतपरिग्रहः, अन्यत्र वेति (४२–१–६) चित्राद्वैतादिपक्षे चेत्यर्थः, ' निरंशत्वादिति ' ( ४२–१–७ ) अंशरहितस्यैकस्य ग्राह्यग्राहकभावाभावेन न स्वेनैव स्वप्रमेयेत्यर्थः । स्वप्रकाशत्वापत्त प्रमाणं तेऽस्त्वतीत्यत आह–' प्रमाणेत्यादि ' ( ४२–१–७ ) तथा च प्रमात्वव्यापकप्रमाणप्रमेयत्वभावाभावे तत्र प्रमात्वाभाव इति भाव । व्याप्याभावाभावे व्यापकाभावादनेकान्तसिद्धौ परमतभङ्गप्रसङ्ग इत्याह– ' तदव्याप्तत्वादिति ' ( ४२–१–७ ) तस्याः प्रमाया अव्याप्तव्यापकनिषेधे, ऐकान्तिकत्वस्याभावादिति ( ४२–१–८ ) अनेकान्तप्रमाणादित्यर्थः, तथा च " नान्योऽनुभाव्यो बुद्ध्याऽस्ति, तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्, स्वयं सैव प्रकाशते " ॥ १ ॥ इति धर्मकीर्त्युक्तं विघटेतेति भावः । परं प्रति प्रसञ्जितमैकान्तिकत्वस्याभावं स्वातन्त्र्येणापि साधयि

तुमाह–' प्रमात्राचीति ' ( ४२–१–८ ) तथा च प्रमात्रायनेकस्वभावत्वेनानेकान्तात्मनोऽनेकान्तात्मकत्वाद्याभ्यन्तरार्थ ग्राहकत्वेनानुभूयमानस्य प्रमाणस्य बलात् संविदद्वैताद्येकान्ताभावसिद्धिरिति भावः । ' भूतवादिभिरिति ' (४२–१–९) भूतवादिभिश्चार्वाकैस्तस्याः स्वप्रमायाः स्वसंविदितत्वोपगमात्, तत्पक्षे च निरंशत्वेन स्वेनैव स्वप्रमायोगात्, प्रमाणप्रमेयस्व-भावव्यावृत्तौ च प्रमाया व्यावृत्तेरित्यर्थः । तदाह–इति सिद्धा तत्र स्वप्रमाया व्यावृत्तिरिति ( ४२–१–१० ) कश्चित्तु तस्येन्द्रियजप्रत्यक्षस्यास्वसंविदितत्वोपगमादिति व्याचष्टे, हेतुं च तत्र भूतचतुष्टयोत्पन्नत्वादिति पूरयति, तदनेकग्रन्थविरुद्ध, चार्वाकमते उत्पत्तिपक्षेऽभिव्यक्तिपक्षे वा ज्ञानस्य स्वसंविदितताया एवानेकग्रन्थसिद्धत्वात्, ' कारणगुणा हि ' इत्यादिन्यायस्तु भूतचैतन्यमेवोच्छिन्द्यात्, न तु तस्यास्वसंविदितत्वं साधयेदिति तदभ्युपगमानुकूल एव, न च मदिरादिदृष्टान्तेन संयोगजत्वा न्यायादेऽस्य न्यायस्याप्यवकाशोऽपीति यत्किञ्चिदेतत्, एतेन ( ४२–१–११ ) चार्वाकमतनिराकरणे स्याद्वादाश्रयणपर्यवसानेन, तेषां सर्वप्रमाणविनिवृत्तिरिति, करणफलभावेनाप्यन्वयतः स्वभावभेदध्रौव्यादित्यर्थः । तेषामपीत्यनन्तरं सर्वप्रमाणविनिवृत्ति रित्यनुषज्यते । एकोपयोगरूपेणानन्वये कारणफलभावस्यैवाभावादिति भावः; सर्वेषामेकान्तवादिनां प्रमाणलक्षणानुपपत्तौ साधारणमेकं हेतुमाह–' प्रत्यक्षादीत्यादि ' ( ४२–२–२ ) ' यागक्षेत्यादि ' माध्यं–यागक्षतुष्टीच्छागुरुपत्यादिक ( ४२–२–४ ) कर्म, क्वचित् एकान्तवादिभिरभिमते, सर्पिषि चादिशाद्धस्येऽप्यपकर्षद्योतकमेकवचनम्, अनावरणज्ञानं ( ४२–२–४ ) निरावरणज्ञान, निराकरोति, अनुमितिनिश्चयाभावप्रतियोगि करोति, तत्र तदभावमनुमापयतीत्यर्थः, अविचि-ष्टयागादेरेव तदभिमतशुचित्वाचस्य च निरावरणज्ञानाभावव्याप्यत्वादिति भावः । न पुनस्तत्प्रतिषेधवादिषु (४२–२–४)

एकान्तानिराकरणादिषु जैनाभिमतेषु सर्वेषु चापेक्ष्येऽप्युत्कर्षद्योतकं चकुवचन, तथा रागादिकमनाविलज्ञानं निराकरोति, विशिष्टस्य तस्य जैनाभिमतसर्वज्ञत्वसिद्धत्वात्, तस्य चानाविलज्ञानव्याप्यत्वादिति भावः । इति एतत्, परमगहनं (४२-२-५) दुर्बोधम्, अतात्पर्यज्ञानामिति शेषः । तात्पर्यज्ञास्तु 'रागद्वेषेत्यादि' धर्मिभेदेन विशिष्टाविशिष्टपरतया योजयन्त आनुषङ्ग्युत्स्यार्थस्यैनैकान्तत्वं च समर्थयन्तो न गहनमनुप्रविशन्तीति ध्येयम् । अत्र चैकान्तवादित्वावच्छेदे नाविशिष्टरागादिनाऽनाविलज्ञानाभावः साध्यमानस्तदभिमते सर्वज्ञेऽपि सिद्ध्यत्यनेकान्तवादित्वसामानाधिकरण्येन च विशिष्टरागादिना साध्यमानमनाविलज्ञानं जैनाभिमतसर्वज्ञे सिद्ध्यति भङ्ग्यादिरूपा सर्वप्रसिद्धरूपकरत्वादित्यभिप्रायवान् विभोति-'तथाहीत्यादि' (४२-२-५) भाष्ये कः परमात्मेति (४२-२-११) तात्पर्यविवरणम्, आत्मत्वस्यैवैकपद मर्तरियपारच्छिन्नज्ञानचानित्यर्थः । चिदेवेति (४२-२-११) घटो नील एवेत्यत्रेव सर्वांशच्छेदेन विदोपसम्म प्रत्येककारार्थत्वात्, लब्ध्युपयोगेत्यादि (४२-२-११) तत्त्वे नियामकाभिधानं भवभूतां (भवतां) प्रभुरिति (४२-२-११) मतं सन्तीति तिरापि भवतो भवभूतस्तेषां गुरुः प्रभुरिति कारिकावयपव्युत्पत्तिस्वारस्यादुक्तं त्वमेव एवेति (४२-२-१४) एतावताऽऽयव्यवच्छेद एव लभ्यते, न तु सर्वावच्छेदेन इत्यमिति तद्धामार्थिना महत्क्ष्यास्यैवानुसरणीया । चिदिति शब्दस्ये (४२-२-१४) स्याद्भिधानं तु मोक्षेवेति मन्तव्यम्, चिच्छब्दस्य केवल ज्ञाने प्रभुत्वेनचविशेषोपमर्दं विनाऽप्रवृत्त, मतिज्ञानार्थलाभे प्रकारस चोक्तत्वात्, इन्द्रियजसंस्कारानुरोधेन च एवेति (४२ १ २) इन्द्रियव्यापारानुसारेणैवेत्यर्थः । इन्द्रियव्यापारश्च शब्दे रूपे रसगन्धस्पर्शेषु च स्पष्टताऽस्पष्टत्वावस्थारूपो ग्राह्यः । अन्यथा

विषयाप्रतिपत्तेरस्पृष्टता चाभिमुख्योपलक्षणमिति नातिप्रसङ्गः, तयोः संस्कारा (४२-१-६) लब्ध्युपयोगयोः संस्काराः, अन्यजनकभावसम्बन्धे षष्ठी, संस्कारशब्दार्थो न स्वरूपार्थप्रक्रमोन्मुखता, तस्या उपयोगरूपत्वेन तदजन्यत्वादित्यतो व्याचष्टे, स्वार्थधारणा इति (४२-१-६) लब्ध्युपयोगजन्यस्मृतिजनकधारणारूपा इत्यर्थः । तेषां लब्ध्युपयोगसंस्काराणाम्, अत्यये अभावे सति स एव स्यादिति (४२-१-६) किञ्चिज्ज्ञत्वनियामकलब्ध्युपयोगसंस्काराभावे सत्यर्थत एव सर्वज्ञः स्यात्, तज्ज्ञाने इन्द्रियाजन्ये प्रत्यक्षत्वं चातीन्द्रियत्वादेवाविरुद्धम्, व्यवहारप्रत्यक्षत्वे इन्द्रियजन्यत्वविभिन्नप्रत्यक्षत्वे इन्द्रियाद्यजन्यत्वस्यापि प्रयोजकत्वादिति भावः । न च प्रत्यक्षत्वमेवेन्द्रियजन्यतावच्छेदकं लाघवादितीन्द्रियसंस्काराभावेऽतीन्द्रियप्रत्यक्षानुपपत्तिरिति वक्तव्यम्, परेणापीश्वरप्रत्यक्षव्यावृत्त्यर्थं प्रत्यक्षनिष्ठवैजात्यस्यैवेन्द्रियजन्यतावच्छेदकत्वोपगमादस्माकं तत्र केवलज्ञानव्यावृत्तस्योपगमे दोषाभावात् । अत एव न मतिज्ञानावरणक्षये क्षायिकमतिज्ञानापत्तिः, भावेन्द्रियसंस्काररूपकेवलेतरप्रत्यक्षत्वावच्छिन्नसामग्र्यभावात् सामान्यसामग्रीसहकृताया एव विशेषसामग्र्याः फलोपधायकत्वात्, तदिदमाह-'कुतः पुनरित्यादि' (४२-१-६) न च सकलावरणक्षय (४२-१-९) इति, तथा च सकलावरणक्षयाविनाभूतो भावेन्द्रियाभाव एवार्थवशसिद्धमतीन्द्रियं सर्वविषयकं प्रत्यक्षमनुभावयतीति भावः । 'देशघातीत्यादि' (४२-१-१०) इदमत्र सम्प्रदायः-देशघातिनीनां मतिज्ञानावरणादिप्रकृतीनां द्विविधानि रसस्पर्द्धकानि भवन्ति सर्वघातीनि देशघातीनि च, कानि तानीति चेत्, यानि चतुःस्थानकानि त्रिस्थानकानि च, तानि सर्वाणि सर्वघातीन्येव, यानि पुनर्द्विस्थानकानि तानि मिश्राणि कानिचित्सर्वघातीनि कानिचिच्च देशघातीनीत्यर्थः । यान्येकस्थानकानि तानि तु देशघातीन्येव, तदुक्तं—" चउतिट्ठाणरसाई,

सव्वघाईसु पुणो फड्डुएसु। सुद्धावियपाणि मीसाणि, देसघाईसि देसाणि ॥ १ ॥ " त्ति, तत्र सर्वघातिरसस्पर्धकेषु परिणामविशेषेण देशघातितया परिणमितेषु क्षायोपशमिका अवध्यादिगुणाः प्रादुर्भवन्ति, यदाह–निहएसु सव्वघाईरसेसु फड्डेसु देसघाईणं। जीवस्स गुणा जायंति ओहिमणचक्खुमाईया ॥ १ ॥ " एवं चात्रौदयिकभावानुविद्धः क्षायोपशमिकभावः प्राप्तः, अनन्तानुबन्ध्यादिमिथ्यात्वमोहप्रकृतीनां त्वस्तु भवोऽपि सर्वघातिप्रकृतिस्वाभाव्यात्तदंशेनापि देशघातितया परिणमनमशक्यमिति तासौदयिकभावाननुविद्ध एव विपाकोदयविष्कम्भकरणात्मा क्षायोपशमिको भावो भवति, केवलज्ञानकेवलदर्शनावरणीययोस्तु विपाकोदयविष्कम्भोऽप्ययोग्यत्वमनन्यगत्या कल्प्यते, अन्यथा तयोः क्षयोपशमप्रसङ्गात्, अधिकं मत्कृतज्ञानबिन्दौ। तदेवं भावेन्द्रियेष्वौदयिकभावानुविद्धस्य क्षयोपशमस्य हेतुतावच्छेदकमावरणनिबन्धनत्वसिद्धिरावरणक्षयोपशमत्वेन वीर्योपशान्ता-वरणत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहस्याप्येतदर्थसाधित्वात्, यदि चैवमौपशमिकक्षायिकादिभावस्थलेऽतिप्रसङ्ग इति, तदाऽस्तु तावत् क्षयोपशमघटकं यथमार्गं परिस्पन्दावरणविपाकविपाकोदयविष्कम्भस्यैव स्वघटितोदयसम्बन्धेन हेतुता, उपशमात् क्षयोपशमविशेषस्य प्रदेशानुभवेनैवाभिधानादेव यद्वा नष्टमित्येनेव भावेन्द्रिये वीर्योपशान्त्यावरणत्वेन न हेतुत्वमित्युक्तावपि न क्षतिरिति मन्तव्यम्, मीमांसक प्रत्यवतिष्ठते–' ननु चेत्यादि ' (४१–१–१४) नहि तत् साधकं प्रत्यक्षं सम्भवतीति (४२–२–१) प्रत्यक्षस्य तावत्प्रतिनियतासन्नरूपादिगोचरत्वादिस्वेन परसन्तानवर्तिसंवेदनवेदनमात्रेऽपि न शक्तिः, किं पुनरतीतानागतवर्तमानसूक्ष्मान्तरितादिसमस्तसकलपदार्थसाक्षात्कारिसंवेदनशालिपुरुषविशेषपरिच्छेदे, विशेषाग्रहणे विशिष्टाग्रहणादिति भावः। 'तदेकदेशस्येति' (४१–२–२) म एकदेश आश्रयो यस्य तस्येत्यर्थः, यद्वा तस्य धर्मिणः

सर्वज्ञस्यैकदेशो धर्मस्तद्रूपस्येत्यर्थः, अस्मिन् पक्षे ' दृष्टो न चैकदेशोऽस्ति लिङ्गं वेति ' वक्ष्यमाणसामानाधिकरण्योपपत्ति
रिति ध्येयम् । तत्र गम्यगमकसमुदायमध्याच्छिन्नमेकदेशो ग्राह्य इति स्याकरे स्पष्टम् । अनिश्चितपक्षधर्मत्वस्य हेतोरगमकत्वा
दनिश्चिते च धर्मिणि हेतोः पक्षधर्मत्वनिश्चयस्य कर्तुमशक्यत्वाच्च केनापि लिङ्गेन सर्वज्ञानुमानं भवतीत्यर्थः । ' अतिप्रस
ङ्गादिति ' (४१–२–४) असाधूनि निबध्नन्तीत्यादेरपि प्रामाण्यप्रसङ्गादित्यर्थः । कर्मार्थवादप्रधानत्वादिति हिरण्यगर्भं
प्रकृत्य स सर्ववित्त्याद्यभिधानस्य कर्मकाण्डफलीभूतहिरण्यगर्भस्तुतिमात्रपरत्वादित्यर्थः, तात्पर्यासम्भवादित्यनन्तर
(४१–२–५) यथाश्रुत इति शेषः । ' आदिमदित्यादि ' (४१–२–७) अनादिनित्यागमो यदि सर्वज्ञमादिमन्तं प्रतिपादयति
तदा स किमभूत् भवति भविष्यति वा कल्पत्रयेऽपि विरोध एवेति भावः । न च मन्त्रार्थवादानामिति (४३–२–१०)
वेदो द्विविधो मन्त्रब्राह्मणभेदात्, तत्र ये वेदभागाः प्रयोगसमवेतमर्थं प्रकाशयन्तः स्वोच्चारणमात्रेण साध्यकर्मापि विनियुज्य
न्तेऽभियुक्तयाज्ञिकैश्च मन्त्रत्वेन समाख्यायन्ते ते मन्त्रास्ते च ऋग्यजुःसामभेदेन त्रिप्रकाराः, अवशिष्टो भागो ब्राह्मणं, तच्च
विध्यर्थवादभेदाद् द्विधा, तत्र विधिर्लिङादिगर्भो वाक्यसन्दर्भः, अर्थवादः स्तुतिनिन्दाभेदाद् द्विविधः, चोदनाशेषस्य तत्सामान्य
लक्षणं, स पुनरर्थवादो द्विविधोऽपि त्रिविधः, तदुक्तं–" विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवा
दस्त्रिधा मतः " ॥१॥ इति, तदिह मन्त्रार्थवादानां यथाश्रुते तात्पर्यं नावकल्प्यते, किन्तु न्यायप्राप्त एवेति नोक्तार्थवादात्
सर्वज्ञसिद्धिरिति व्यक्तोऽर्थः । स्यादाशङ्का धर्माद्युपदेशकरणान्यथानुपपत्त्या सर्वज्ञसिद्धिर्भविष्यति, तत्र विकल्पद्वयमुपतिष्ठते, को
नामात्र धर्माद्युपदेशोऽन्यथानुपपद्यमानो वाच्यः, सौगतादिसम्बन्धी त्रयीवित्सम्बन्धी वा, नाद्यः, व्यामोहादेव बौद्धादीनां

सव्वघाईम्मि इति कड्डयं । दुट्ठाणियाणि मीसाणि, देसघाईम्मि सेसाणि ॥ १ ॥ " त्ति, तत्र सर्वघातिरसस्पर्द्धकेषु परिणामविशेषेण देशघातितया परिणमितेषु क्षायोपशमिका अवध्यादिगुणाः प्रादुर्भवन्ति, तदाह–निहएसु सव्वघाईरसेसु फड्डेसु देसघाईण । जीवस्स गुणा जायंति ओहिमणचक्खुमाईआ ॥ १ ॥ " एवं चात्रौदयिकभावानुविद्धः क्षायोपशमिकभावः प्राप्तः, अनन्तानुबन्ध्यादिसर्वघातिमोहप्रकृतीनां त्वसौ मतोऽपि सर्वघातिप्रकृतिस्वाभाव्यात्तत्रांशेनापि देशघातितया परिणमनमशक्यमिति तास्वौदयिकभावाननुविद्ध एव विपाकोदयविष्कम्भणलक्षणः क्षायोपशमिको भावो भवति, केवलज्ञानकेवलदर्शनावरणीययोस्तु विपाकोदयविष्कम्भेऽप्ययोग्यत्वमनन्यगत्या कल्प्यते, अन्यथा तयोः क्षयोपशमप्रसङ्गात्, अधिकं मत्कृतज्ञानबिन्दौ । तदेवं भावेन्द्रियेष्वौदयिकभावानुविद्धस्य क्षयोपशमस्य हेतुत्वात् तेषामावरणनिबन्धनत्वसिद्धिरावरणक्षयोपशमत्वेन क्षीणोपशान्ता वरणत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहस्याप्येवंदर्शनसाधितत्वात्, यदि चैवमौपशमिकक्षायिकादिभावस्थलेऽतिप्रसङ्ग इति, मतान्तरं त्वाश्रयात् क्षयोपशमघटकं क्षयमात्रं परित्यज्यावरणविपाकविपाकोदयविष्कम्भस्यैव स्वसंवलितोदयसम्बन्धेन हेतुता, उपशमात् क्षयोपशमविशेषस्य भवेत्तानुभवेनैवाभिधानादेव तादे नष्टमणित्वेनैव भावेन्द्रिये क्षीणोपशान्तावरणत्वेन न हेतुत्व मित्युक्तावपि न क्षतिरिति मन्तव्यम्, मीमांसक शरणविप्लुते–' ननु चेत्यादि ' (४१–१–१८) नहि तत् साधक प्रत्यक्षं सम्भवतीति (४२–२–१) प्रत्यक्षस्य तावत्प्रतिनियतासन्नरूपादिगोचरचारित्वेन परसन्तानवर्तिसंवेदनवेदनमात्रेऽपि न शक्तिः, किं पुनरतीतानागतवर्तमानसूक्ष्मान्तरितादिस्वभावसकलपदार्थसाक्षात्कारिसंवेदनशालिपुरुषविशेषपरिच्छेदे, विशेषा प्रत्यये विशिष्टप्रत्ययादिति भावः । 'तदेकदेशस्येति' (४१–२–२) स एकदेश आश्रयो यस्य तस्यैकदेशः, यथा तस्य धर्मिणः

धुकेन शिथिलायमानस्यानेन प्रामाण्यनिश्चये इदं साधकत्वमित्यत्र तात्पर्यम् । तत्राबाधकासम्भवाख्यं विश्वासनिबन्धनम्, मभूतेऽपि (४५-१-४) सर्वज्ञेऽपि, तदभावे (४५-१-४) बाधकासम्भवाभावे, मासिद्धयत् मा प्रापत्, तज्ज्ञापकोप-लम्भस्येति (४५-२-२) अभावप्रमाणवादिमतमवलम्ब्यान्यस्य शङ्कामपाकरिष्यन्नाह—न तु प्रामाण्यं प्रत्ययं सञ्चरः, तस्याभावप्र-माणानभ्युपगन्तृत्वादिति द्रष्टव्यम् । अयं सर्वज्ञग्राहकप्रमाणाभावः स्वसम्बन्धी सर्वसम्बन्धी वा तदभावसाधक उपेयः । आद्य आह—सर्वज्ञाप्यप्रवृत्तित (४५-२-३) इति, स्वसम्बन्धिनस्तस्य स्वमात्रविश्रान्तत्वान्न सर्वत्र सर्वज्ञाभावसाधकत्वमिति भावः । अन्त्ये त्वाह—'गृहीत्वेत्यादि' (४५-२-६) तथा च सर्वसम्बन्धिनः सर्वज्ञग्राहकप्रमाणाभावस्य दुर्ज्ञानत्वान्न प्रकृता-भावसाधकत्वमिति भावः । परोपगमत (४५-२-९) इति, स सर्वज्ञः (४५-२-१०) परोपगमतः (४५-२-१०) परसिद्धान्तेन सिद्धो नास्तीति यदि साध्यते मीमांसकेन, तदा स परोपगमः प्रमाणमप्रमाणं वेति विकल्पद्वयमुपतिष्ठते, आद्य आह—'तस्येति' तस्य परोपगमस्य प्रमाणत्वे व्याघातस्तत्स्वभावग्राहकस्य प्रमाणसिद्धस्यार्थस्य निषेद्धुमशक्यत्वादिति भावः । अन्त्ये आह—'अन्यथेति' अन्यथा (४५-२-१०) परोपगमस्याप्रमाणत्वे, स सर्वज्ञः, अन्योन्यवादिप्रतिवादिनोः सिद्धो न भवेत् धर्म्यसिद्धत्वात्, तथा च तस्य नास्तित्वमनुमानेन साधयितुमशक्यम्, धर्मिणस्तु पश्चान्वा उभयवादिसिद्धता वक्तव्या इति समयपन्थाविति भावः । अत्राह मीमांसकः—'नन्वेवमिति' (४५-२-१०) एवं परप्रमाणमात्रसिद्धस्यानिषेध्यत्वे, सर्वथै-कान्ताः परोपगमसिद्धः (४५-२-१०) कथं जैनैर्निषिध्यन्ते ? अत्रोत्तरम्, इति धीमतां न चोद्य (४५-२-१०) न द्रष्टव्यम्, यतोऽनन्तधर्मात्मन्यर्थे प्रमाणबाधिते सिद्धे तत्रैकान्ताभावसाधने न दोषः, अनेकान्तात्मकज्ञानस्यैवैकान्तानुपलम्भ-

धुकेन शिथिलायमानस्यानेन प्रामाण्यनिश्चये दृढं साधकत्वमित्यत्र तात्पर्यम् । तत्राबाधकासम्भवाख्यं विश्वासनिबन्धनम्, प्रकृतेऽपि (४५-१-४) सर्वज्ञेऽपि, तदभावे (४५-१-४) बाधकासम्भवाभावे, नास्तिकत्वम् मा प्रापत्, तज्ज्ञापकोपलम्भस्येति (४५-२-३) अभावप्रमाणवादिमतमुपन्यस्य दूषयितुमभिप्रायवानाह—न तु प्रामाण्ये प्रत्ययं सङ्कर, तस्याभावप्रमाणानन्तर्भावादिति प्रष्टव्यम् । अयं सर्वज्ञग्राहकप्रमाणाभावः स्वसम्बन्धी सर्वसम्बन्धी वा तदभावसाधक उपेयः । आद्य आह—सर्वत्राप्यप्रवृत्तित (४५-२-१) इति, स्वसम्बन्धिनस्तस्य स्वमात्रविश्रान्तत्वाच्च सर्वत्र सर्वज्ञाभावसाधकत्वमिति भावः । अन्त्ये त्वाह—'गृहीत्वेत्यादि' (४५-२-३) तथा च सर्वसम्बन्धिनः सर्वज्ञग्राहकप्रमाणाभावस्य दुर्ज्ञानत्वाच्च प्रकृताभावसाधकत्वमिति भावः । परोपगमात ( ४५-२-९ ) इति, स सर्वज्ञः ( ४५-२-१० ) परोपगमतः (४५-२-१०) परसिद्धान्तेन सिद्धो नास्तीति यदि साध्यते मीमांसकेन, तदा स परोपगमः प्रमाणमप्रमाणं वेति विकल्पद्वयमुपतिष्ठते, आद्य आह—'तस्येति' तस्य परोपगमस्य प्रमाणत्वे व्याघातस्तदभावग्राहकस्य प्रमाणसिद्धस्यार्थस्य निषेद्धुमशक्यत्वादिति भावः । अन्त्ये आह—'अन्यथेति' अन्यथा (४५-२-१०) परोपगमस्याप्रमाणत्वे, स सर्वज्ञः, अन्योन्यथाविप्रतिपादिनोः सिद्धो न वादिन एवासिद्धत्वात्, तथा च तस्य नास्तित्वमनुमानेन साधयितुमशक्यम्, धर्मिहेतुदृष्टान्ता उभयवादिसिद्धा वक्तव्या इति समञ्जस्याक्षिति भावः । अत्राह मीमांसकः—'नन्वेवमिति' ( ४५-२-१० ) एवं परप्रमाणमात्रसिद्धस्यानिषेध्यत्वे, सर्वथैकान्तः परोपगमसिद्धः ( ४५-२-१० ) कथं जैनैर्निषिध्यते ? यत्रोक्तम्, इति भीमतां न दोष ( ४५-२-१० ) न प्रष्टव्यम्, यतोऽनन्तधर्मात्मकमर्थं प्रमाणावाधिते सिद्धे तत्रैकान्ताभावसाधने न दोषः, अनेकान्तात्मकज्ञानस्यैवैकान्ताद्युपलम्भ

धर्माद्युपदेशोपपत्तेरिति गम्यम् । अन्ये त्वाह–'धर्माद्युपदेशस्येति' (४४–१–३) त्रयीवित्सम्बन्धी धर्माद्युपदेशोऽन्यथाऽपि सार्वज्ञ्याभावेऽपि महाजनपरिग्रहेणैवोपपद्यत इति भावः । 'उपदेशो हि' इत्यादि (४४–१–४) कारिका पूर्वपक्षपरा, बुद्धादयो हि (४४–१–८) इत्यादिकारिकाद्वयं विकल्पद्वयसमाधानपरम्, तत्र ये त्विति (४४–१–८) अस्या अयमर्थः । ये तु मन्वादयस्त्रयी-विदां मध्ये प्राधान्येन सिद्धाः, कीदृशा इत्याह–त्रयीविद्भिराश्रितो ग्रन्थः स्मृत्यादिरूपो येषां कर्तॄणां ते तथा ते मन्वादयो वेदप्रभवोक्ततया (४४–१–९) साङ्गमीमांसाध्ययनसमासादितव्युत्पत्तिविशेषसध्रीचीनवेदार्थानुसन्धानप्रभवबुद्धधर्माद्युपदेशा इत्यर्थः, तथा च तदुपदेशस्य वेदार्थविवेकेनान्यथोपपद्यमानत्वान्न सर्वज्ञागमकत्वमित्यर्थः, 'न च गृध्रेत्यादि' (४४–२–२) गृध्राणां चक्षुःप्रत्यक्षेण वराहाणां श्रोत्रप्रत्यक्षेण पिपीलिकानां च घ्राणप्रत्यक्षेणेत्यर्थः, नक्तञ्चरप्रत्यक्षेण (४४–२–३) घूकबिडालमूषकतस्करादिप्रत्यक्षेणेत्यर्थः, प्रत्यक्षादीत्यादिनाऽनुमानादेरपि साध्ये सद्भावात् तत्र व्यभिचारसम्भवप्रदर्शनायाह 'कास्यापनादीति' (४४–२–३) तस्यापीति (४४–२–४) उक्तप्रत्यक्षादेरपीत्यर्थः । एवं चेन्द्रियाद्यघटितसामग्रीजन्यत्वनिवेशस्य साध्यत्वादवान्तरविशेषेणापि सामान्यसामग्र्यनुप्रवेशनान्न व्यभिचार इति भावः । ननु सर्वमिदं प्रत्यक्षमात्रस्येन्द्रियजन्यत्वसिद्धावुपपद्यते तदेव नास्ति ऐन्द्रियकप्रत्यक्ष एवेन्द्रियस्य हेतुत्वादत आह–'न च दृष्टेत्यादि' (४४–२–१३) प्रत्यक्षानन्तिम एव लाघवेनेन्द्रियस्य हेतुत्वादिन्द्रियजन्यतावच्छेदकजात्यन्तरकल्पने गौरवाभावादतीन्द्रियप्रत्यक्षसम्भावनेत्यर्थः । 'विविधप्रकृष्टेति' (४५–१–१) त्रिः स्वभावदेशकालैर्विप्रकृष्टा इत्यर्थविशेषणेनापि, बाधकासम्भवादिति (४५–१–३) यद्यप्येवं साधकप्रामाण्यग्राहकत्वं बाधकासम्भवस्य व्यवतिष्ठते न तु स्वातन्त्र्येण साधकत्वं, तथापि व्यवहारादेः साधकस्य सद्भा-

नुरोधेनात्मन एव चोपांशस्य प्रकाशस्य द्रव्यांशस्य चाक्षेपविज्ञानाभावरूपस्याप्रकाशस्य सद्भावो भावयतामपि मामहं न जानामीत्यात्मनि कर्तरि भासमाने तदज्ञानानुभवेन द्विरूपताया अनपह्नवनीयत्वादित्याशयवान् शङ्कते–' कुतः पुनरित्यादि ' (४९–२–१) यतोऽसावित्यादि क्रमेणैवेत्यन्त (४९–२–२) अज्ञत्वस्वभावप्रतिषेधफलप्रदर्शनम्, अज्ञानस्वभावाभ्युपगमे तद्विषयानामसम्भवात् तं सर्वमपि क्रमेणैवेत्यस्यानुपपत्तेः । स एव च प्रतिषेधः कुतः स्वभावद्वयेऽपि साधकस्याभिहितत्वादिति प्रश्नार्थः । चोदनाज्ञान एव त्वयाऽशेषविषयत्वोपगमात् तद्दृष्टान्तेनात्मनः सर्वज्ञत्वस्वभावसिद्धौ तत्प्रतिषेधाभावस्वभावत्वं कल्पनीयम्, मां न जानामीत्यस्य विशेषज्ञानाभावपरत्वेनाप्युपपत्तेः, रूपिद्रव्येऽरूपस्येव चिद्द्रव्येऽप्रकाशस्य द्रव्यांशस्याभ्युपगन्तुमशक्यत्वात्, एतेन वेदान्तिनां भावरूपाज्ञानवादोऽपि निरस्तः, तादृशस्यापि तस्य ज्ञानविरुद्धत्वात्, समवायतदितरप्रत्यासत्तिभ्यां ज्ञानाज्ञानयोर्विरोधनिराकरणे च कर्मण एवाज्ञाननामपर्यवसानात्, कर्मकृतेन चाज्ञानेन चिद्धिपर्येण त्रैकालिकस्यात्मनो ज्ञस्वाभाव्यस्याप्रतिघातादित्युत्तरग्रन्थार्थः । ' कथमेवमिति ' (४९–२–७) सर्वज्ञस्वभावत्वेऽऽत्मनः कदाचिदप्यज्ञानोदयो दुर्घट इत्ययं प्रश्नः । मिथ्यात्वमोहनीयकर्मोदयसध्रीचीनकेवलज्ञानावरणप्रतिबद्धाशेषज्ञस्वभावस्वप्रतिबन्धकज्ञानावरणकर्मोदयमहिम्ना तत्सिद्धिरित्याशयेनोत्तरमाह–उच्यत इत्यादिना, सम्बन्ध्यन्तर (४९–२–८) क्षीरनीरन्यायेन स्वाभिन्न स्वसम्बन्धि, मोहोदयकारणक (४९–२–८) मोहोदयकारणं, कप्रत्ययः स्वार्थे, घटुमीढो घटाज्ञानकारणाभावात्तदुत्तरवैफल्यापत्तेः, वक्ष्यमाणानुमानविरोधाच्चेति द्रष्टव्यम् । 'अनन्तार्थव्यञ्जनपर्यायात्मकमिति' (४९ २-१२) अत्रार्थव्यञ्जनपर्यायलक्षणविवेकार्थमयं श्लोकः " स्थूलो व्यञ्जनपर्यायो, वा गम्यो नश्वरः स्थिरः । सूक्ष्मः प्रतिक्षणध्वंसी,

त्वेनानेकान्तात्मतायां विधिरूपत्वादेकान्तात्मतायां च निषेधरूपत्वात्, अत एव घटादौ भूतलादिज्ञानस्यैव घटाद्यनुपलम्भरूपत्वे घटाद्यभावप्रसिद्धिः सम्बन्धेऽनुयोगित्वप्रतियोगित्वादेर्वैज्ञानिकस्य वस्तुत्वसाधकत्वात्, इष्यते च विशिष्टज्ञानविरहेऽपि विशिष्ट धर्मावच्छिन्नप्रतियोगिता परैरपि, तद्वदिहापि पदार्थत्वमात्रस्योभयपर्यायावच्छेदकतयाऽप्रतियोगिताश्रयत्वाभ्युपगमे न काचिद नुपपत्तिः, वैज्ञानिकसम्बन्धेन पदार्थत्वस्यापि प्रतियोगितावच्छेदकत्वाद्विशिष्टनिषेधव्यवहारे परं विशिष्टप्रतियोगिप्रतिपत्तये विक- स्वरूपा सम्बन्धः प्रसिद्धिरपेक्ष्यते, एतेन भावाभावो न समप्रतियोगिकः, किन्तु तत्प्रकार इत्यपि नयपथोऽनुगृहीतो भवति, सर्वत्र सर्वाभावाद्यनुपलम्भे च नेयं गतिः, सर्वत्र किञ्चिज्ज्ञानस्यैव तद्रूपत्वात्, तस्य चात्यन्तमसम्भवादिति सर्वं सुस्थम्। साध कानिर्णयादिति ( ४९-१-११ ) साधकत्वप्रकारकनिश्चयाभावात् सत्तायां बाधकत्वप्रकारकनिश्चयाभावाच्चासत्तायामनुत्क- टकोटिकत्वे चोत्कटकोटिकारेका स्यादित्यर्थः। न साधकानिश्चयाद् वा बाधकानिश्चयात् संशयः, किन्तु ज्ञानप्रामाण्यसंशया दित्यन्ये, प्रकृतज्ञानेऽगृहीतप्रामाण्यकत्वस्यावश्यवक्तव्यत्वात् गृहीतप्रामाण्यकस्य संशयकत्वं, न तु प्रामाण्यसंशयादर्थसंशय इत्यपरे। ननु भवभूतो भवः सर्वज्ञ एवेति कोऽयं विधिः अन्यस्याप्रमाणत्वमीदृक्प्रतिपादकत्वेनैव भवभूतप्रमाणत्वसिद्धेरन भिमतकीटसंख्यादिपरिज्ञानस्याकिञ्चित्करत्वादित्याशङ्कायामाह भाष्यकृत् ' न चास्तीति ' (४९-२-१) तथा च ज्ञानस्य सर्वविषयकत्वमात्मनश्च सर्वविषयकज्ञानवत्त्वं स्वभाव एवेत्याविर्भूततत्स्वभावे भगवतो सर्वज्ञत्वमर्थसिद्धतयैवावर्जनीयमिति भावः। यं न लभेत (४९-२-१) यं नाधगच्छेत्। तस्य भावान्तरनिषेधात् (४९-२-१) भावस्वभावनिषेधात्, नन्वज्ञ स्वभावस्यात्मना स्वभाव एव, ज्ञानाज्ञानोभयरूपस्यैवात्मनो जैनैः स्वीकारात्, सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति परामर्शा-

मुखेनैनात्मन एव बोधांशस्य प्रकाशस्य ग्रन्थांशस्य चाक्षेपविज्ञानाभावरूपस्याप्रकाशस्य प्रसूतौ जाग्रदवस्थायामपि मामहं न जानामीत्यात्मनि कर्तरि भासमाने तदज्ञानानुभवेन द्विरूपताया अनपह्नवनीयत्वादित्याशयवान् शङ्कते–' कुतः पुनरित्यादि' (४६–२–२) यतोऽसावित्यादि कर्मेतिवेत्यन्तं (४६–२–२) अज्ञत्वस्वभावप्रतिषेधफलप्रदर्शनम्, अज्ञानस्वभावाभ्युपगमे तद्विषयानाक्रमणसम्भवात् सं सर्वमयं कर्मेतिवेत्यस्यानुपपत्तेः । स एव च प्रतिषेधः कुतः स्वभावद्वयेऽपि साधकस्याभिहितत्वादिति प्रश्नार्थः । चोदनाज्ञान एव स्वपाऽऽक्षेपविषयत्वोपगमात् तद्दृष्टान्तेनात्मनः सर्वज्ञत्वस्वभावसिद्धौ तद्विप्रतिषेधाज्ञस्वभावत्वं कल्पनीयम्, मां न जानामीत्यस्य विशेषज्ञानाभावपरत्वेनाप्युपपत्तेः, रूपिद्रव्येऽरूपस्येव चिद्द्रव्येऽप्रकाशस्य ग्रन्थांशस्याभ्युपगन्तुमशक्यत्वात्, एतेन वेदान्तिनां भावरूपाज्ञानवादोऽपि निरस्तः, तादृशस्यापि तस्य ज्ञानविरुद्धत्वात्, समवायतदितरसम्बन्धाभ्यां ज्ञानाज्ञानयोर्विरोधनिराकरणे च कर्मण एवाज्ञाननामपर्यवसानात्, कर्मकृतेन चाज्ञानेन चिद्विवर्तेन त्रैकालिकस्यात्मनो ज्ञस्वाभाव्यस्याप्रतिघातादित्युत्तरग्रन्थार्थः । ' कथमेवमिति ' (४६–२–७) सर्वज्ञस्वभावत्वे चात्मनः कदाचित्प्यज्ञानोदयो दुर्घट इत्ययं प्रश्नः । मिथ्यात्वमोहनीयकर्मोदयसध्रीचीनकेवलज्ञानावरणप्रतिबद्धाज्ञेयज्ञस्वभाव स्वशक्तिकज्ञानावरणकर्मोदयमहिम्ना तत्सिद्धिरित्याशयेनोत्तरमाह–उच्यन्त इत्यादिना, सम्बन्ध्यन्तरं (४६–२–८) क्षीरनीरन्यायेन स्वमिश्रं स्वसम्बन्धि, मोहोदयकारणाक (४६–२–८) मोहोदयकारणं, कप्रत्ययः स्वार्थे, मधुप्रीतौ पुष्टाज्ञानकारणाप्राप्त्युपरवैफल्यापत्तेः, वक्ष्यमाणानुमानविरोधाच्चेति द्रष्टव्यम्। 'अनन्तार्थव्यञ्जनपर्यायात्मकमिति' (४६ २ १२) अभार्थव्यञ्जनपर्यायलक्षणविवेकार्थमयं श्लोकः " स्थूलो व्यञ्जनपर्यायो, वा गम्यो नश्वरः स्थिरः । सूक्ष्मः प्रतिक्षणध्वंसी,

चर्यापर्यायसंश्रयाः ॥१॥" इति, तारकाञ्जनवदिति (४७-१-२) तारका अञ्जनं च तारकाञ्जने ते इव तद्वदिति समासः । 'सा पुनर्योग्यतेति' (४७-१-३) नन्वेवं द्रव्यचाक्षुषादौ तत्सन्निकर्षक्षयोपशमस्यापि विना हेतुता वाच्या, तद्धेतुता च चाक्षुषसन्निकर्षादिरेवेति तद्धेत्वोरित्यादिन्यायेन प्रत्यक्षे इन्द्रियार्थसन्निकर्षस्य हेतुत्वं युक्तमिति चेत्, न । तत्रापि तद्धेत्वोरित्यादिन्यायस्य सुलभत्वेनान्तरङ्गप्रत्यासत्तेः क्षयोपशमहेतुतायामेव विनिगमकत्वात्, एतेन स्थैर्यपक्षे विषयनिष्ठाया योग्यताया अपराधेर्मनःसन्निकर्षस्याहेतुत्वे भित्त्याद्यावृतस्य चाक्षुषापत्तिरित्यादिकमपास्तम्, आवृतचाक्षुषजनकक्षयोपशमवतां तदापत्तेरिष्टत्वात्, अनावृतचाक्षुषे चावरणेनैव क्षयोपशमप्रतिबन्धात्, अपरेषां तु दिव्याञ्जनादिसंस्कृतचक्षुषामनुभूयमानमित्याद्यावृतचाक्षुषानुपपत्तिः, तत्र चाक्षुषस्यापलापे च घटादिज्ञानेऽपि तदपलापप्रसङ्गो विज्ञानस्य सर्वस्य समानसत्ताया एव युक्तत्वात्, किञ्च प्रत्यासत्तिहेतुतावादिना नेत्राञ्जनसूक्ष्मतारकाप्रत्यक्षप्रत्यायासत्त्यतिदूरत्वयोर्दोषत्वं वाच्यम्, आदर्शसाम्मुख्यस्याञ्जनादिसन्निधाने च तत्प्रत्यक्षत्वाच्च तद्विषये तदभावविशिष्टप्रत्यासत्त्यतिदूरत्वाभावस्य चाक्षुषहेतुत्वं वाच्यमित्यतिगौरवं, मम तु क्षयोपशमे विशिष्य हेतुता, चाक्षुषत्वे तु विलक्षणक्षयोपशमत्वेनैव समानविषयत्वप्रत्यासत्त्येति लाघवं, किञ्चेन्द्रियप्रत्यासत्तेरपि क्षयोपशमापायकत्वेनैव प्रत्यक्षहेतुता वाच्या, असंख्येयसमयप्रविष्टानामेव पुद्गलानां ग्रहणयोग्यतायाः पारमर्षेऽभिधानात्, तत्सम्बन्धे चोपानुक्रमेण तस्य च यौगिकत्वात्तत्सम्बन्धेनैव समये क्षयोपशमपुरस्सरेण सिद्धेः, तथा च योग्येन्द्रियविषयसम्बन्धानक्रमेणापि क्षयोपशमहेतुत्वेनानुपगम्य प्रत्यक्षहेतुतां तथा विलक्षणक्षयोपशमत्वेनैव हेतुतायां किं लाघवं नोदीर्यते, एतेन तरणौ वेगेन चक्षुषो युगपदनेकार्थसन्निकर्षेऽपि क्वचिदेव प्रतिनियतधर्मप्रकारकग्रहो नान्यत्रेति नियमात् चक्षुःसन्निकर्ष-

विषयमाहारम्यादीनां विशेष्यप्रत्यक्षसामग्रीत्वेनानुगतानां हेतुत्वमित्यपि व्याख्यातम्। तत्रौपधायकतासम्बन्धेन विलक्षणक्षयोप-शमवत्त्वस्यैव सामग्रीपदार्थत्वात्, तस्या यावत्कारणरूपत्वेऽतीतानागतविषयचक्षुःसन्निकर्षाभावे चाक्षुषानुपपत्तेः, एतेनैव तद्व्यक्ति-व्यक्तिविषयकचाक्षुषे तद्व्यक्तिचक्षुःसंयोगत्वेनैव व्यासज्यवृत्तिधर्मप्रत्यक्षानुरोधेन कारणता कल्प्यते तत एव तद्व्यक्ति सामान्य वृत्तिगुणकर्माभावचाक्षुषनिर्वाहाच्चक्षुःसंयुक्तसमवायादिप्रत्यासत्त्यकल्पनलाघवादिति नवीननैयायिकोक्तमप्यपास्तं, कार्यतावच्छेदक-लक्षणादिप्रत्यासत्त्यासन्निकृष्टतद्व्यक्तिविषयकप्रत्यक्षवारणाय तद्व्यक्तिनिष्ठलौकिकविषयताशालित्वस्य लौकिकविषयताया नियमाय तत्र प्रत्यासत्ति-घटकतयाऽवश्यनिवेशनीयतया तद्व्यक्तिनिष्ठायास्तद्गतगुणकर्माभावादिनिष्ठायाश्च लौकिकविषयताया नियमाय तत्र प्रत्यासत्ति-विशेषस्य मम तत्स्थाने क्षयोपशमविशेषस्य च हेतुताया आवश्यकत्वात्। किञ्च व्यासज्यवृत्तिधर्मस्य घटाकाशसंयोगादेर्गुरुत्वा दिवद्योग्यत्वादेव न प्रत्यक्षं, चक्षुःसंयुक्ततदसंयुक्तघटपटसंयोगाप्रत्यक्षत्वस्य तु नोक्तकार्यकारणभावादपि निर्वाहः, संयो-गादिप्रत्यक्षस्य यावदाश्रयविषयकत्वनियमोक्तावपि परस्परानवच्छेदकावच्छेदेन घटचक्षुःसंयोगपटचक्षुःसंयोगोभयसत्त्वे घटपटसंयोगादिप्रत्यक्षापत्तेर्दुर्वारत्वात्, स्वावच्छेदकावच्छिन्नघटवृत्तिपटसंयोगावच्छेदकावच्छिन्नत्वसम्बन्धेन घटचक्षुःसंयोग विशिष्टपटचक्षुःसंयोगत्वादिना तद्धेतुत्वे तु विनिगमनाविरहादनन्तकार्यकारणभावापत्तेर्महागौरवं, तस्माद्द्रव्यसमवेतान्या व्यासज्यवृत्तिप्रत्यक्षे व्याप्यवृत्तेरप्यवच्छेदकस्वीकारे वा द्रव्यसमवेतप्रत्यक्षत्वावच्छिन्न एव चक्षुःसंयोगावच्छेदकावच्छिन्नसमवा-यसम्बन्धावच्छिन्नाधारतानिरूपकत्वस्य प्रत्यासत्तित्वं परस्य वक्तुमुचितमिति यत्किञ्चिदेतत्, वस्तुतो द्रव्यविषयकचाक्षुषस्य सामग्र्येव न तद्वृत्तिगुणकर्माभावप्रत्यक्षनिर्वाहो, द्रव्याविषयकस्यापि परमाणुद्व्यणुकयोर्महत्त्वरूपाभावचाक्षुषस्य परैरभ्युपगमा

र्मः । यथा सर्वदायवारकत्वं चक्षोः स्वभावो मतिसम्बद्धकरतलस्थापवादस्तु ततः प्रतिबन्धकत्वस्वभावा सर्वक्रियाधमासित्वं चि
दात्मनः स्वभाव एव, छद्मस्थे तत्प्रतिबन्धस्तु प्रतिपन्न एव इति, सकलावरणगमेऽर्थसिद्धमेव भगवतः सर्वज्ञत्वमिति । अत
एवाक्षानपेक्षेति (४७–१–८) भाष्यप्रतीके भवमूलभमोरिति योजनीयम्, तथावरणेति (४७–१–१०) अक्षापेक्षा हि ज्ञाने
विषयसत्त्वार्थं तथावधिमनःपर्याययोः क्षयोपशमातिशयादेवेति तयोस्तदनपेक्षत्वेऽपि न क्षतिरिति भावः । स्वविषये परिस्फुट
स्यादिति भूम इति (४७–१–११) तथा च प्रत्यक्षत्वे स्पष्टतैव प्रयोजिका, सा च द्विविधा, सकलस्पष्टता देशस्पष्टता च, आद्याया
मावरणक्षयः प्रयोजकः, द्वितीयायां च क्वचिदिन्द्रियं क्वचिद्गुणविशेषः, मतिश्रुतयोः परोक्षत्वनये तु गुणविशेष एवेति मन्तव्यम्।।

एवं सति प्रकृतेऽप्रयोजकत्व स्यादक्षापेक्षत्वेऽपि गुणविशेषादतिस्पष्टत्वसम्भवादित्याशङ्कस्य समाधत्ते–न चैव साकल्ये
नेत्यादिना (४७–१–११) एवमवधिज्ञानमनःपर्यायज्ञानयोरक्षानपेक्षत्वे सत्साधर्म्येण केवलज्ञानस्य तथात्वप्राप्तौ भगवत्यस्य
क्षमक्षानपेक्षं साकल्येन विरतव्यामोहत्वात् सर्वदर्शनत्वाद्वा यन्नैवं तन्नैवं यथाऽस्मदादिप्रत्यक्षमिति व्यतिरेकिणि हेतोरनैकान्ति-
कत्वमप्रयोजकत्वं न शङ्कनीयम्, एव इत्याह–'विपक्षइति' (४७–१–१२) अब्रवीति च, उभाभ्यामक्षापेक्षत्वस्य स्पष्टता
प्रयोजकत्वं खण्डितं भवति, तथा चाक्षापेक्षत्वं देशस्पष्टत्वेऽपि न प्रयोजकं किं पुनः सर्वस्पष्टत्वइति, हेतुसत्त्वे साध्यासत्त्वे प्रकृते
सर्वस्पष्टत्वानुपपत्तिर्बाधिकास्तर्क इति नाप्रयोजकत्वमिति भावः । न चापेक्षत्वेऽपि गुणविशेषात् सर्वस्पष्टत्वोपपत्तिः केवलज्ञानोत्पाद
कगुणस्यैव लाघवादिन्द्रियसंस्कारनाशकत्वेन तस्य वहिर्भूतत्वादिति द्रष्टव्यम्, विकलप्रत्यक्षस्येति (४७-१ १४) पारमार्थिक
प्रत्यक्षमात्रस्य पक्षीकरणे तु भागासिद्धतयाऽस्याहेतुत्वं स्यादेवेत्यर्थः । तर्हि सत्यस्वम (४७–२–३) इति, नन्वेवं स्वाम्यज्ञान-

विशेष चक्षुराद्यनपेक्षायां चाक्षुषादौ व्यपेक्षानियमभङ्गः, कथमिति चेत्, सत्यं पश्यामीत्यनुभवानुरोधेन स्वात्मविशेषेऽपि चाक्षुषत्वसिद्धस्तत्र च चक्षुराद्यपेक्षाव्यतिरेकस्य स्पष्टत्वादित्यवेहि, पश्यामीत्यभिलापे विषयताविशेष एव प्रयोजको नतु चाक्षुषत्वं जातिः, स च चक्षुःसन्निकर्षप्रयोज्यो दोषविशेषप्रयोज्यश्चेति न दोष इति चेत्, न, सत्यत्वस्य स्वमविशेषणस्याभिधानेन दोषविशेषप्रयोज्यत्वापत्तेः तादृशविषयताविशेषावच्छिन्नेऽनुगतक्षयोपशमविशेषस्यैव हेतुत्वेनालोकचक्षुषस्तत्रानियतहेतुतया एव युक्तत्वात् द्रव्यचक्षुर्व्यापाराभावेऽपि भावचाक्षुषस्य 'पंचिंदिओव्व बउलो' इत्यादिदृष्टान्तसिद्धत्वेनापसिद्धान्तायोगादिति दिक्।

दोषावरणयोर्हानिर्निःशेषास्त्यतिशायनात् । क्वचिद्यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः ॥ ४ ॥

दोषावरणसामान्ययोर्हानिः प्रसिद्धत्वाद्धर्मित्वेन न विरुध्यते । तन्निःशेषत्वं पुनरस्मदादिषु देशतो निर्दोषत्वस्य ज्ञानादेश्च कार्यस्य निश्चयात्सत्त्वस्यैव, अन्यथा तदनुपपत्तेः । सा क्वचिन्निःशेषास्तीति साध्यते, साध्यसाधनयोरत्र विप्रतिपत्तेः । अतिशायनादिति हेतुः । कनकपाषाणादौ किट्टकालिकाद्यन्तर्बहिर्मलक्षयो यथेति दृष्टान्तः, प्रसिद्धत्वात् । स हि कनकपाषाणादौ प्रकृष्यमाणो दृष्टो निःशेषः । तद्वद्दोषावरणहानिरपि प्रकृष्यमाणास्मदादिषु प्रतीता सती क्वचिन्निःशेषाऽस्तीति सिध्यति । कः पुनर्दोषो नामावरणाद्भिन्नस्वभाव इति चेत्, उच्यते । वचनसामर्थ्यादज्ञानादिर्दोषः स्वपरपरिणामहेतुः । न हि दोष एवावरणमिति प्रतिपादने कारिकायां दोषावरणयोरिति द्विवचनं समर्थम्, ततस्तत्सामर्थ्यादावरणात्पौद्गलिकज्ञानावरणादिकर्मणो भिन्नस्वभाव एवाज्ञानादिर्दोषोऽभ्यूह्यते । तद्धेतुः पुनरावरणं कर्म जीवस्य पूर्वस्वपरिणामश्च । स्वपरिणामहेतुक एवाज्ञानादिरित्ययुक्तं, तस्य कादाचित्कत्वविरोधाज्जीवत्वादिवत् । परपरिणामहेतुक एवेत्यपि न व्यवतिष्ठते, मुक्तात्मनोऽपि तत्प्रसङ्गात्, सर्वस्य कार्यस्योपादानसहकारिसामग्रीजन्यतयोपगमात्तथा प्रतीतेश्च । तथा च दोषो

मृतशरीरादौ चैतन्यरोगादिनिवृत्तिवत् । यदि पुनरयं निर्बन्धः सर्वत्र विप्रकर्षिणामभावासिद्धेस्तदा कलशस्य भूमावविनाशाभावा व्याप्तेरसिद्धेर्न कश्चित् । तत्र श्रोत्रोपनिक्षिप्यकाणामनारम्भणीयमेतत्, अनुमानोच्छेदप्रसङ्गात् । न हि जैमिनीयमतानुसारिणो विप्रकर्षिणामर्थानामभावासिद्धिमनुमन्यन्ते, तेषां कर्मोऽभावासिद्धिप्रसङ्गात् सर्वज्ञाभावसाधनविरोधात् । ते तामनुमन्यमाना वा श्रोत्रोपनिक्षिप्यका एव । न चैषामेवास्तमनीयं, अनुमानोच्छेदस्य दुर्निवारत्वात्, साध्यसाधनयोर्व्याप्त्यसिद्धेः । परोपगमाद्व्याप्तिसिद्धेर्नानुमानोच्छेद इति चेत् न, तस्यापि परोपगमान्तरात्सिद्धावनवस्थाप्रसङ्गात् तस्यानुमानात्सिद्धौ परस्पराश्रयप्रसङ्गात् । प्रसिद्धेऽनुमाने ततः परोपगमस्य सिद्धिस्तत्सिद्धौ च ततो व्याप्तिसिद्धेरनुमानप्रसिद्धिरिति । ततो न श्रेयानयं निर्बन्धः सर्वात्मना चेतनादिगुणव्यावृत्तिः पृथिव्यादेर्न सिद्ध्यत्येवेति । तत्सिद्धौ च न दृष्टान्ता हेतोर्व्यभिचारः, तस्याः सपक्षत्वात् । तथा हि । यस्य हानिरतिशयवती तस्य क्वचित्सर्वात्मना व्यावृत्तिः यथा पुरुषादिगुणस्यात्मनः । तथा च दोषावरणयोर्हानिरतिशयवती क्वचिन्निवर्तयितुमर्हति सकलकलङ्कमिति कथमकलङ्कसिद्धिर्न भवेत् ? ननु च यदि प्रध्वंसाभावो हानिस्तदा सा पौद्गलिकस्य ज्ञानावरणादेः कर्मद्रव्यस्य न संभवत्येव, नित्यत्वात्, तत्पर्यायस्य तु हानावपि कुतश्चित् पुनः प्रादुर्भावान्न निःशेषा हानिः स्यात् । निःशेषकर्मपर्यायहानौ वा कर्मद्रव्यस्यापि हानिप्रसङ्गः, तस्य तदविनाभावात् । तथा च निरन्वयविनाशसिद्धेरात्मादिद्रव्याभावप्रसङ्ग इति कश्चित्, सोऽप्यनवबुद्धसिद्धान्त एव । यस्मात्, मणेर्मलादेर्व्यावृत्तिः क्षयः, सतोऽत्यन्तविनाशानुपपत्तेः । तादृगात्मनोऽपि कर्मणो निवृत्तौ परिशुद्धिः । प्रध्वंसाभावो हि क्षयो हानिरिहाभिप्रेता । सा च व्यावृत्तिरेव, मणेः कनकपाषाणादेः मलस्य किट्टादेर्वा । न पुनरत्यन्तविनाशः । स हि द्रव्यस्य वा स्यात्पर्यायस्य वा ? न तावद्द्रव्यस्य, नित्यत्वात् । नापि पर्यायस्य, द्रव्यरूपेण ध्रौव्यात् । तथा हि । विवादापन्नं मण्यादौ मलादि पर्यायार्थतया नश्वरमपि द्रव्यार्थतया ध्रुवं, सत्त्वान्यथानु-

मलः पुनरस्यागन्तुकः, कर्मोदयनिमित्तकत्वात् । स चात्मनः प्रतिपक्ष एव । ततः परिक्षयी । तथा हि । यो यस्यागन्तुकः स तत्स्वनिर्ह्रासनिमित्तविवर्धनवशात्परिक्षयी । यथा जात्यहेम्नि ताम्रादिमिश्रणकृतः कालिकादिः । आगन्तुकश्चात्मन्यज्ञानादिर्मलः इति स्वभावहेतुः । न तावदयमसिद्धः । कथम् ? यो यत्र कादाचित्कः स तत्रागन्तुकः । यथा स्फटिकाश्मनि लोहिताद्याकारः । कादाचित्कश्चात्मनि दोष इति । न चेदं कादाचित्कत्वमसिद्धं, सम्यग्ज्ञानादिगुणाविर्भावदशायामात्मनि दोषानुपपत्तेः । ततः प्राक्तनसद्भावाद्गुणाविर्भावदशायामपि तिरोहितदोषस्य सद्भावान्न कादाचित्कत्वं, सातत्यसिद्धेरिति चेत्, न, गुणस्याप्येवं सातत्यप्रसङ्गात् । तथा च चिरस्यगर्भादेर्वर्तमानकालेऽपि चेतनाभावप्रसङ्गः । ज्ञानाज्ञानयोः परस्परविरुद्धत्वादेकत्रैकदा न प्रसङ्ग इति चेत्, तत एव सकलगुणदोषयोरेकत्रैकदा प्रसङ्गो मा भूत् । पुनर्दोषस्याविर्भावदर्शनाद्गुणकालेऽपि सत्तामात्रसिद्धिरिति चेत्, तर्हि गुणस्यापि पुनराविर्भावदर्शनाद्दोषकालेऽपि सत्तामात्रसिद्धिः, सर्वथा विशेषाभावात् । तथा चात्मनो दोषस्वभावत्वसिद्धिवद्गुणस्वभावत्वसिद्धिः कुतो निवार्येत ? । विरोधादिति चेत्, दोषस्वभावत्वसिद्धिरेव निवार्यतां, तस्य गुणस्वभावत्वसिद्धेः । कुतः सेति ? चेत्, दोषस्वभावत्वसिद्धिः कुतः ?, संसारित्वान्यथानुपपत्तेरिति चेत्, तर्हि संसारित्वं सर्वस्यात्मनो यदनादित्वं, तदा प्रतिवादिनोऽसिद्धं, प्रमाणतो मुक्तिसिद्धेः । कुत इति चेत्, इमे ब्रूमहे । क्वचिदात्मनि संसारोऽत्यन्तं निवर्तते तत्कारणस्यात्यन्तनिवृत्त्यन्यथानुपपत्तेः । संसारकारणं हि मिथ्यादर्शनादिकमुभयप्रसिद्धं क्वचिदत्यन्तनिवृत्तिमत्, तद्विरोधिसम्यग्दर्शनादिपरमप्रकर्षसद्भावात् । यत्र यद्विरोधिपरमप्रकर्षसद्भावस्तत्र तदत्यन्तनिवृत्तिमनुभवति, यथा चक्षुषि तिमिरादि । नेदमुदाहरणं साध्यसाधनधर्मविकलं, कस्यचिच्चक्षुषि तिमिरादेरत्यन्तनिवृत्तिमत्त्वप्रसिद्धेस्तद्विरोधिविशिष्टाञ्जनादिपरमप्रकर्षसद्भावसिद्धेश्च निर्विवादकत्वात् । कथं मिथ्यादर्शनादिविरोधि सम्यग्दर्शनादि निर्णीयते इति चेत्, तदुत्कर्षे तदपकर्षदर्शनात् । यद्धि प्रकृष्यमाणं

पत्प्रकर्षेति यत् तद्विरोधि सिद्धम्। यथोष्णस्पर्शः प्रकृष्यमाणः शीतस्पर्शमपकर्षयंस्तद्विरोधी। मिथ्यादर्शनादिकमपकर्षयति च प्रकृष्यमाणं कश्चित्सम्यग्दर्शनादि तत् तद्विरोधि। कथं पुनः सम्यग्दर्शनादेः कश्चित्परमप्रकर्षसद्भावः सिद्ध इति चेत्, प्रकृष्यमाणत्वात्। यदि प्रकृष्यमाणं तत्कचित्परमप्रकर्षसद्भावभाग्दृष्टम्। यथा नभसि परिमाणम्। प्रकृष्यमाणं च सम्यग्दर्शनादि। तस्मात्परमप्रकर्षसद्भावभाक्। परत्वापरत्वाभ्यां व्यभिचार इति चेत् न, तयोरपि सपर्यन्तजगद्वर्तिनो परमप्रकर्षसद्भावभाक्त्वसिद्धेः। न चापर्यन्तं जगदिति वक्तुं शक्यं विशिष्टसन्निवेशत्वात्पर्वतवत्। यत्पुनरपर्यन्तं तन्न विशिष्टसन्निवेशं सिद्धं, यथा व्योम। विशिष्टसन्निवेशं च जगत् तस्मात्सर्वथा सपर्यन्तमिति निगदितमन्यत्र। संसारेणानैकान्त इति चेत् न, तस्याप्यभव्यजीवेषु परमप्रकर्षसद्भावसिद्धौ प्रकृष्यमाणत्वेन प्रतीतेः। एवं मिथ्यादर्शनादिभिर्व्यभिचारः प्रत्याख्यातः, तेषामप्यभव्येषु परमप्रकर्षसद्भावात्। ततो नानैकान्तिकं प्रकृष्यमाणत्वं परमप्रकर्षसद्भावे साध्ये। नापि विरुद्धं, सर्वथा विपक्षाद्व्यावृत्तत्वात्। इति कश्चिन्मिथ्यादर्शनादिविरोधि सम्यग्दर्शनादि परमप्रकर्षसद्भावं साधयति। स च क्वचिन्मिथ्यादर्शनादेरत्यन्तनिवृत्तिं गमयति। सा च गम्यमाना स्वकार्यसंसारस्यात्यन्तनिवृत्तिं निश्चाययति। यासौ संसारस्यात्यन्तनिवृत्तिः सा मुक्तिरिति। तदन्यथानुपपत्तेरात्मनो ज्ञानादिगुणस्वभावत्वसिद्धेर्न दोषस्वभावत्वसिद्धिः, विरोधात्। प्रसिद्धायां कश्चिदात्मनि निःश्रेयसप्राप्तौ गुणस्वभावतायामन्यत्रापि तन्निर्णयः, जीवत्वान्यथानुपपत्तेः, प्रसिद्धे च सर्वस्मिन्नात्मनि ज्ञानादिगुणस्वभावत्वे दोषस्वभावत्वासिद्धेः सिद्धं दोषस्य कदाचित्कत्वमागन्तुकत्वं साधयति। ततः स एव परिणामी स्वनिर्ह्रासनिमित्तविपक्षवर्धनवशात्क्वचित् सुस्पष्टमाप्नोति दोषनिर्ह्रासनिमित्तस्य सम्यग्दर्शनादेर्विशेषेण वर्धनप्रसाधनात्। इत्यावरणस्य द्रव्यकर्मणो दोषस्य च भावकर्मणो भूधर इव महतोऽत्यन्तनिवृत्तिसिद्धेः कर्मभूभृतां भेत्ता मोक्षमार्गस्य प्रणेता स्तोतव्यः समवतिष्ठते विश्वतत्त्वानां ज्ञाता च।

शरीरत्वेन गृहीत इति (८९-२-१) अभ्युपगमाभ्युपगमार्थं इत्यादि सम्बन्धमुक्तरीत्या शरीरात्मनोः कथञ्चिदेकत्वेन तथैव प्रति ठोऽस्तोऽस्मेतरानुभवसिद्धत्वेन चात्मगृहीतत्वके पृथिव्यादिशरीरे मुक्तादिनिक्षेपध्वंसस्य युक्तियुक्तत्वादिति भावः। नहि प्रति योगिसमवायिदेश एव ध्वंसप्रागभावौ स्त इति नैयायिकवचन भवतमर्थ, समवायिकारणनाशजन्यद्रव्यनाशस्य निरधिकरण त्वापत्तेः, न च समवायिकारणसमवायिकारणमेव तत्राधिकरणं, तथात्वस्यत्रेऽप्यधिकरणचिन्तायां परमाणुविभागापत्तेः, तदू गतस्य च तस्य यथा प्रतीतिसम्बन्धविशेषेण स्थूलावयवनिष्ठताभ्युपगमे किमपरमधिकरणान्तरेण, येन तत्र तद्व्यापतीति सिद्धावप्यपतप्येतेति दिक्। आवरणहानिर्न साध्या द्रव्यार्थपर्यायार्थविकल्पानुपपत्तेरित्याशयवानाह पूर्वपक्षे 'ननु च यदी स्यादि' (९०-१-९) स्वसमानाधिकरणस्वप्रतियोगिजातीयप्रागभावासमानकालीनत्वविशेषणादावरकत्वावच्छिन्नध्वंसस्य था साध्यत्वाश दोषस्त्वभिप्रायवान् सिद्धान्तयति सोऽप्यनवद्युक्तस्त्व (९०-१-११) इत्यादिना, सकलकर्मपर्यायनाशस्य कर्मत्वविशिष्टद्रव्यनाशनियतत्वेऽपि तदुपलक्षितद्रव्यनाशानियतत्वाश निरन्वयनाशापत्तिरित्याह-' सकलकर्मेत्यादि ' (९०-२-३) ननु कर्मपर्यायत्वावच्छिन्ने कर्मद्रव्यत्वेनाकर्मपर्यायत्वावच्छिन्ने चाकर्मद्रव्यत्वेन हेतुत्वात् कथं मुक्तौ कर्मद्रव्यस्या कर्मपर्यायाक्रान्ततया परिणमनमिति चेत्, न। पुद्गलद्रव्यस्यैवावस्थाविशेषेण कर्माकर्मात्मकतया परिणमनादन्योन्याभा वस्याव्याप्यवृत्तित्वादुभयरूपतोपपत्तेः, नन्वेवं जीवद्रव्यमपि निःशेषितजीवपर्यायमजीवपर्यायानालिङ्गनमजीवद्रव्यं स्यात्, तद्द्रव्यस्य तदन्यद्रव्यपर्यायपरिणमनाभावव्याप्यस्योपगमे च कर्मद्रव्यमप्यकर्मपर्यायपरिणामि न स्यादिति चेत्, न जीवा जीवपरिणामयोः प्रदेशविरोधस्य कर्माकर्मपरिणामयोश्च कालविरोधस्य सिद्धान्तसिद्धत्वेनोक्तप्रतिबन्धयोगात् द्रव्यत्वसाधर्म्य

प्याप्यत्वावच्छेदेन नियतपर्यायारम्भवादो, न तु तद्वान्तरव्याप्यवच्छेदेनेति परमार्थः। युक्त चैतत्, परेषां अन्यथाविपरीत्वा पदच्छिमे शुचिपीत्वादिना हेतुत्वे गौरवादित्यादि विपश्चितमन्यत्र। एतेनोत्तरपर्यायस्यैव पूर्वपर्यायध्वंसत्वेन, तुच्छः पट्टप दार्थीभिमतत्वेनाभिमतः, ततो नातिप्रसक्त्यत (१०-२-१) इति कर्मैकत्वेऽप्यात्मैकत्वस्यव्यवच्छिन्नबुद्धिविकल्पेऽप्यात्मकैकत्वं स्यादित्यतिप्रसङ्गो नापद्यते स्वलक्षणीभूतनिःक्षेपपर्यायवैकल्पस्यासाध्यत्वात्सत्त्वादेति भाव। न च लक्षणाभाव (१०-२-११) इत्यादि, तथा च शुद्धिपर्यायः स्वाश्रयद्रव्ये निःक्षेपतो हीयते पर्यायत्वादित्यत्र स्वलक्षणतावच्छेदकानवच्छि स्वस्योपाधेः सत्त्वादसमर्थत्वमिति भावः। यद्यपि कर्मपर्यायत्वमपि कर्मद्रव्यलक्षणतावच्छेदकमेव, तथापि द्रव्यविभागकोपा ध्यवच्छिन्नलक्ष्यतानिरूपितलक्षणतावच्छेदकानवच्छिन्नत्वमुपाधिरित्यत्र तात्पर्यम्। 'न पुनर्द्रव्यार्थतयेति' (१०-२-१२) द्रव्यार्थतया हानेरतद्द्रव्यस्वरूपत्वादिति भावः। कायाधिष्ठानात्मनि दोष (११-१-४) इति, तथा च कादाचि त्कत्वाद्ज्ञानादेर्दोषस्य द्रव्यार्थतया हानिरविरुद्धेति, सा चास्मदुक्तविवेकमद्धयैव भावनीया। कादाचित्कत्वं च यद्यपि दुःखादेरप्यस्ति, तथाप्यधिकृतपर्यायतावच्छेदकावच्छेदेन सर्वं द्रव्यार्थतया निःक्षेपहानिम्याप्यं, न च शुद्धिपर्यायत्वावच्छेदेन तथास्ति स्वलक्षणत्वव्याघातात्, वस्तुतः शुद्धद्रव्यार्थतया हानिरप्रसिद्धैव, आदिद्रव्यार्थतया त्वज्ञानस्येव पुण्यादेरपि हानेः पर्यायार्थतापर्यवसन्नत्वाच्च दोषावहत्वं, केवलज्ञानस्यापि 'जे संपयणाईमा इत्यादिग्रन्थेन भवस्थकेवलिपर्यायतया हानेः सम्म त्यादिसिद्धत्वेनापसिद्धान्तगन्धस्याप्यभावात्, केवलं भवान्तः पर्यायार्थतयाऽज्ञानादेर्हानिर्न तु पुण्यादेः, यत्र च भवीत्यमत्वा- दापेक्षया द्रव्यार्थत्वमुप्पत्तत्वेऽपि तावान् स्वमनपसिद्धो विवेकः तिरोभावादिना गुणदोषस्य सातत्यं तज्जुपत्वमेव निराकरिष्यत

इति सर्वमवदातम् । जीवस्यान्यथानुपपत्तेरिति (९१-२-११) जीवस्य सतोऽभव्यादेरप्यावरणबन्धादावरणेन च सतामेव ज्ञानादिगुणानामभिभवस्य कर्तुं शक्यत्वादभव्यादेरपि ज्ञानादिगुणस्वभावत्वमेवेत्यर्थः । यद्यप्यभव्यादावात्मनि गुणदोषेण पसमानसमविरुद्धं, परेषामपि विगुणेऽप्यगुणस्येषास्माकं विभावगुणपर्यायेऽपि स्वभावगुणपर्यायस्य हेतुत्वसम्भवात्, सदात्म त्वावृतत्वावच्छेदकभेदेन चोभयसमावेशस्याप्यविरोधादष्टकनिर्देशकपारमर्षस्याप्येतदर्थानुकूलत्वात् तथापि प्राधान्येन व्यपदेशा भवन्तीति न्यायानुसारिणीयमुक्तिरिति ध्येयम् ।

**सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद्यथा । अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थितिः ॥ ५ ॥**

सूक्ष्माः स्वभावविप्रकर्षिणोऽर्थाः परमाण्वादयः, अन्तरिताः कालविप्रकर्षिणो रामादयो, दूरास्तु देशविप्रकर्षिणो हिमवदादयस्ते कस्यचित्प्रत्यक्षा, अनुमेयत्वाद्यथाऽग्न्यादिरित्येवं सर्वज्ञस्य सम्यक् स्थितिः स्यात् । अथ मतमेतत् "सूक्ष्मादयोऽर्था यथाभूताः कस्यचित्प्रत्यक्षास्तथाभूता एव यद्यनुमेयत्वेन साध्यन्तेऽन्यथाभूता वा ? यथाभूताश्चेत्सिद्धसाध्यता, सूक्ष्माणां सहस्रधा भिन्नकेशाग्रादीनामन्तरितानां च प्रपितामहादीनां दूरार्थानां च हिमवदादीनां कस्यचित्प्रत्यक्षत्वप्रसिद्धेः । अन्यथाभूतानां तु कस्यचित्प्रत्यक्षत्वसाधने अनुमेयत्वादिरप्रयोजको हेतुः, क्ष्माधरादीनां बुद्धिमत्कारणत्वे साध्ये सन्निवेशविशिष्टत्वादिवत् । धर्म्यसिद्धिश्च, परमाण्वादीनामप्रसिद्धेः स्यात्" इति तदयुक्तं, विवादाध्यासितानां सूक्ष्माद्यर्थानां कस्यचित्प्रत्यक्षत्वेन साध्यत्वादप्रसिद्धं साध्यमिति वचनात् । धर्मादयो हि कस्यचित्प्रत्यक्षत्वेन वादिप्रतिवादिनोर्विवादापन्नास्त एव कस्यचित्प्रत्यक्षा इति साधयितुं युक्ता न पुनरन्ये । न चैवं धर्म्यसिद्धिः, धर्मादीनामसर्वज्ञवादिनोऽपि धर्मित्वस्य सिद्धत्वात् । नन्वेवं भूधरादीनां धीमद्धेतुकतया विवादापन्नानां तथा साध्यत्वे कथमप्रयोजको

शब्दानित्यत्वसाधनेऽपि कृतकत्वादावपि विकल्पः किं न स्यादिति । शब्दे हि धर्मिणि, कृतकत्वादिहेतुर्यद्यनित्यशब्दधर्मस्तदाऽसिद्धः । को मामानित्यशब्दधर्मं हेतुमिच्छतामनित्यशब्दस्यैव नेष्टेः ? अथ नित्यशब्दधर्मस्तदा विरुद्धः, साध्यविरुद्धसाधनात् । अथोभय-धर्मस्तदा व्यभिचारी, सपक्षेतरयोर्वर्तमानत्वात् । इति सर्वानुमानोच्छेदः, कचित्तावकाशो साध्ये धूमवत्त्वादावपि विकल्पस्यास्य समानत्वात् । विमत्यधिकरणभावापन्नविनाशधर्मिधर्मत्वे कृतकत्वादेरसंभवद्बाधकत्वादेरपि सन्दिग्धसद्भावधर्मिधर्मत्वं सिद्धं बोद्धव्यम् । ननु च शब्दादेर्धर्मिणः शब्दत्वादिना प्रसिद्धसत्ताकस्य सन्दिग्धानित्यत्वादिसाध्यधर्मकस्य धर्मो हेतुः कृतकत्वादिरिति युक्तं, सर्वथाप्यसिद्धसत्ताकस्य तु सर्वज्ञस्य कथं विवादापन्नसद्भावधर्मकस्य धर्मो हेतुरसंभवद्बाधकत्वादिर्युज्यते, प्रसिद्धो धर्मी त्वप्रसिद्धधर्मविशेषणविशिष्टतया स्वयं साध्यत्वेनेप्सितः पक्ष इति वचनात्, कथञ्चिदप्यप्रसिद्धस्य धर्मित्वायोगात् । इति कश्चित्, सोऽपि यदि सकलोपसंहारवर्तिनं शब्दं धर्मिणमाचक्षीत तदा कथं प्रसिद्धो धर्मीति ब्रूयात् ? तस्याप्रसिद्धत्वात् । परोपगमात्तत्प्रसिद्धः इष्टः प्रसिद्धो धर्मीति चेत्, स्वाभ्युपगमात्सर्वज्ञः प्रसिद्धो धर्मी किन्न भवेद्धेतुधर्मिवत् । परं प्रति समर्थित एव हेतुधर्मः साध्यसाधन इति चेत् सर्वज्ञोऽपि परं प्रति समर्थित एवास्तु, विशेषाभावात् ? किञ्च सर्वथा प्रसिद्धसत्ताको धर्मी कथञ्चिद्वा ? सर्वथा चेत्, शब्दादिरपि धर्मी न स्यात् तस्याप्रसिद्धसाध्यधर्मोपाधिसत्ताकत्वात् । कथञ्चित्प्रसिद्धसत्ताकः शब्दादिर्धर्मीति चेत् । सर्वज्ञः कथं धर्मी न स्यात् ? प्रसिद्धात्मत्वादिविशेषणसत्ताकस्याप्रसिद्धसर्वज्ञत्वोपाधिसत्ताकस्य च धर्मिणोऽभ्युपगमे सर्वथा नामसिद्धसत्ताकत्वं, कथञ्चित्प्रसिद्धसत्ता-कत्वात् । स्याद्वादिनो हि कश्चिदात्मा सर्वज्ञोऽस्तीति पक्षप्रयोगमाचक्षते, नान्यथा । ततोऽयमनुपालभमानो धर्मित्वमात्रं न लभ्यस्यैव, महत्त्वानुमाने सर्वज्ञस्य धर्मित्वापादनात् । सूक्ष्माद्यर्था एव चात्र धर्मिणः प्रसिद्धाः कुत्राप्यप्रसिद्धसत्ताका एव, परमाण्वादीनामपि

प्रमाणसिद्धत्वेन सत्त्वभावत्वात् । ननु सूक्ष्मादयोऽर्थाः किमिन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षाः उताहो योगिप्रत्यक्षेण ? प्रथमविकल्पेऽनुमानविरुद्धः पक्षः सूक्ष्मादयो न कस्यचिदिन्द्रियग्रामविषयाः, सर्वेन्द्रियसम्बन्धरहितत्वात् । ये तु कस्यचिदिन्द्रियग्रामविषयास्ते न सर्वेन्द्रियसम्बन्धरहिता दृष्टाः । यथा घटादयः । सर्वेन्द्रियसम्बन्धरहिताश्च सूक्ष्मादयोऽर्थास्तस्मान्न कस्यचिदिन्द्रियग्रामविषयाः ' इति केवलव्यतिरेकिणाऽनुमानेन बाध्यमानत्वात् । न च सर्वेन्द्रियसम्बन्धरहितत्वमसिद्धं, साधारणपरमाणुधर्मादीनामिन्द्रियसम्बन्धाभावात् । तथा हि । न कस्यचिदिन्द्रियं साक्षात्परमाण्वादिभिः सम्बध्यते, इन्द्रियत्वादस्मदादीन्द्रियवत् । योगजधर्मानुगृहीतमिन्द्रियं योगिनस्तैः साक्षात्सम्बध्यते इति चेत्, कोऽयमिन्द्रियस्य योगजधर्मानुग्रहो नाम ? स्वविषये प्रवर्तमानस्यातिशयाधानमिति चेत्, तदसमर्थ एव, परमाण्वादौ तस्येन्द्रियस्य प्रवर्तनाभावात्, प्रवर्तने वा योगजधर्मानुग्रहस्य वैयर्थ्यात् । तत एवेन्द्रियस्य परमाण्वादिषु प्रवृत्तौ परस्पराश्रयप्रसङ्गः । तदीन्द्रियस्य योगजधर्मानुग्रहे परमाण्वादिषु प्रवृत्तिः सत्यां च तस्यां योगजधर्मानुग्रह इति । परमाण्वादिष्विन्द्रियस्य प्रवृत्तौ सहकारित्वं योगजधर्मानुग्रह इति चेत्, न, स्वविषयातिक्रमेण तस्य तत्र तदनुग्रहायोगात्, अन्यथा कस्यचिदेकस्येन्द्रियस्य सकलरसादिषु प्रवृत्तौ तदनुग्रहप्रसङ्गात् । स्वविरोधमात्रमेवमिति चेत् । समानमन्यत्र । यथैव हि चक्षुरादीनि प्रतिनियतरूपादिविषयाणि दृष्टानि नाप्रतिनियतसकलरूपादिविषयाणि, तथोपलब्धियोग्यप्रमाणानि महत्त्वोपेतानि पृथिव्यादिद्रव्याणि तत्समवेतरूपादीनि च चक्षुरादीन्द्रियगोचरतया प्रसिद्धानि, न पुनः परमाण्वादीनि । समाधिविशेषोत्थधर्ममाहात्म्यात् स्वविषयातिक्रमेण परमाण्वादिषु चक्षुरादीनि प्रवर्तन्ते न पुना रसादिष्वेकमिन्द्रियम्, इति न किंचिद्विशेषनिबन्धनमन्यत्र जाड्यात् । एतेन परम्परया परमाणुरूपादिष्विन्द्रियसम्बन्धः प्रतिव्यस्तः, संयोगाभावे संयुक्तसमवायादीनामसंभवात् । श्रोत्रे शब्दसमवायासंभवे शब्दत्वेन समवेतसमवायासंभववत् ।

यदि पुनरक्रमेणाप्यकरणं योगजधर्मानुगृहीतं युगपत्सकलसूक्ष्माद्यर्थविषयमिष्यते तदापि दृष्टातिक्रम एव मनसो युगपदनेकत्र विषये प्रवृत्त्यदर्शनात्। तत्र दृष्टातिक्रमेष्टौ वा स्वयमात्मैव समाधिविशेषोत्थधर्मविशेषवशादन्तःकरणनिरपेक्षः साक्षात् सूक्ष्माद्यर्थान् पश्यतु किमिन्द्रियेणान्तःकरणेन ? तथा च नेन्द्रियज्ञानेन कस्यचित्प्रत्यक्षाः सूक्ष्माद्यर्थाः संभाव्यन्ते। अतीन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षाः साध्यन्ते इति चाप्रसिद्धविशेषणः पक्षः, कस्यचिदतीन्द्रियज्ञानप्रत्यक्षस्याप्रसिद्धेः सांख्यं प्रति विनाशी शब्द इत्यादिवत्। साध्यशून्यश्च दृष्टान्तः स्यादग्न्यादेरतीन्द्रियप्रत्यक्षविषयत्वाभावात्। इति केचित्तेऽपि न सम्यग्वादिनः, सूक्ष्माद्यर्थानामिन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षत्वासाधनात्तत्पक्षनिक्षिप्तदोषानवतारात्। तथा साधयतां स्याद्वादिभिरपि तद्दोषसमर्थनात्। नाप्यतीन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षत्वं साध्यते येनाप्रसिद्धविशेषणः पक्षः साध्यशून्यश्च दृष्टान्तः स्यात्, प्रत्यक्षसामान्येन कस्यचित्सूक्ष्माद्यर्थप्रत्यक्षत्वसाधनात्। प्रसिद्धे च सूक्ष्माद्यर्थानां सामान्यतः कस्यचित्प्रत्यक्षत्वे सर्वज्ञत्वस्य सम्यक्स्थित्युपपत्तेस्तत्प्रत्यक्षस्येन्द्रियानिन्द्रियानपेक्षस्य सिद्ध्यत्येव। तथा हि। योगिप्रत्यक्षमिन्द्रियानिन्द्रियानपेक्षं, सूक्ष्माद्यर्थविषयत्वात्। यन्नेन्द्रियानिन्द्रियानपेक्षं तन्न सूक्ष्माद्यर्थविषयं दृष्टं, यथास्मदादिप्रत्यक्षम्। सूक्ष्माद्यर्थविषयं च योगिनः प्रत्यक्षं सिद्धं, तस्मादिन्द्रियानिन्द्रियानपेक्षम्। नावधिमनःपर्ययप्रत्यक्षाभ्यां हेतुर्व्यभिचारी, तयोरपीन्द्रियानिन्द्रियानपेक्षत्वसिद्धेः। ननु च कस्येदं सूक्ष्माद्यर्थप्रत्यक्षत्वं साध्यते ? अर्हतोऽनर्हतः सामान्यात्मनो वा ? यदि विमष्टार्थप्रत्यक्षत्वमर्हतः साध्यते पक्षदोषोऽप्रसिद्धविशेषणत्वम्। तत एव व्याप्तिर्न सिद्ध्येत्। अनर्हतस्तथाप्यनिष्टानुषङ्गोऽपि। कः पुनः सामान्यात्मा वस्तूभयव्यतिरेकेण यस्य विवक्षितार्थप्रत्यक्षत्वम्। इत्येतद्विकल्पजालं शब्दनित्यत्वेऽपि समानं, न केवलं सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संशीतौ वा। तदयमनुमानमुद्रां भिनत्ति। न कश्चित्सूक्ष्मादिसाक्षात्कारी, पुरुषत्वादेः, रथ्यापुरुषवत्। विधावपि पुरुषः

१४

सूक्ष्मादिसाक्षात्कारित्वेन संशयित एव विप्रकृष्टस्वभावत्वात् पिशाचादिवत् । इति सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संशीतौ वा साधयितुं विकल्पत्रयं समानं सिद्धमेव । स हि यत्र प्रतिषेधं संशयं वा साधयन् किमर्हतः साधयेदनर्हतः सामान्यात्मनो वा ? अर्हत्पक्षेऽसिद्धविशेषणः पक्षो व्याप्तिश्च न सिध्येत् दृष्टान्तस्य साध्यशून्यत्वानुपपत्तेः । अनर्हत्पक्षेऽप्येष दोषो दुर्वारः परस्यासिद्धेरनिष्टानुषङ्गश्च, अर्हत्सत्त्वस्यात्र विधाननिषेधात् । का पुनः सामान्यात्मा यदुभयस्याविशेषेण यस्य विवक्षितार्थस्यास्य प्रतिषेधसंशयौ साध्येते ? इति । यद्व्यक्तिसाधनेऽपि समानमेव विकल्पजालम् । तथा हि । अयं शब्दानां नित्यत्वं साधयन् सर्वगतानां साधयेदसर्वगतानां वा सामान्यात्मनो वा ? वर्णानां नित्यत्वमव्यभिचारिणा सर्वगतानां यदि साधयति स्यादप्रसिद्धविशेषणः पक्ष इतरथानिष्टानुषङ्गः । कीदृक् पुनः सामान्यं नाम यदुभयदोषप्रसङ्गपरिहाराय कल्प्येत ? सर्वगतत्वसाधनेऽपि समानम् । तद्धि वर्णानाममूर्तानां साधयेन्मूर्तानां वा असमानात्मनो वा ? यदमूर्तानां सर्वगतत्वं साधयेत्तदाप्रसिद्धविशेषणता पक्षस्य । अथ मूर्तानामनिष्टानुषङ्गः कीदृक् पुनः सामान्यं नाम यदुभयदोषप्रसङ्गपरिहाराय कल्प्येत ? सर्वगतेतरसामान्यात्मन इव मूर्तेतरसामान्यात्मनोऽसम्भवाद्धर्मेषु । तदेवमनुमानमुद्रा सर्वत्र भिनत्तीति अनुमानविचारणायामधिकृता स्यात् । अविवक्षितविशेषस्य पक्षीकरणे समः समाधिरित्यलमतिविस्तृतमिथ्याविकल्पौघैः । यथैव हि सप्तरसादिविवक्षितसर्वगतत्वासर्वगतत्वविशेषस्याविवक्षायामव्यभिचारिहेतुना नित्यत्वे साध्ये न कश्चिद्दोषः स्यात्, साध्यविवक्षितामूर्तेतरविशेषस्य सर्वत्रोपलभ्यमानमनुगमकारिणा सर्वज्ञत्वे तथैवानिषेधविधानेऽर्हदर्हद्विशेषस्य कस्यचित्पुरुषस्य विप्रकृष्टार्थसाक्षात्करणेऽपि साध्येऽनुमेयत्वादिहेतुना न कश्चिद्दोषः परपरिकल्पितमिथ्याविकल्पैरेषां प्रकृतसाधनाप्रतिबन्धः तेषाममविचारितत्वात् साधसमाने इव सम्यक्साधनेऽपि स्याद्विपर्ययापादनात् । ततो निरवद्यमिदं साधनं कस्यचित्सूक्ष्मादिसाक्षात्कारित्वं साधयति ।

नन्वस्तु नामैवं करणविस्रम्भेभूभृतेरित्यमिप विश्ववस्तुसाक्षात्कारित्वं, प्रमाणसद्भावात्। स तु परमात्मार्थेभिवेति कथ निश्चयो यतोऽमेव महानमितम्यो भवतामिति व्यवसितामनुमानपुरस्सरं भगवतो विशेषसर्वज्ञत्वपर्यनुयोग सवीचायार्याः प्राहुः ॥ ५ ॥

यथाऽन्यादिरिति (९४–१–८) तथा च कारिकायाम् 'अनुमेयत्वतोऽग्न्यादि' इत्यत्राग्न्यादिरित्यतः प्राग् यथेत्यध्याहृत्य योजनीयम्, अन्यथा दृष्टान्तयोगानुपपत्तेरिति ध्येयम्, तस्य स्वभावभेदाभावादिति (९४–२–३) यद्यपि स्वभाव मेदाभावेऽप्यनुकूलतर्कानवतारेऽप्रयोजकत्वशङ्कादिसव्यभिचारसंशयोऽनुमितिं प्रतिबध्नीयात्, स्वभावभेदेऽपि च क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र कार्यत्वावच्छिन्नं प्रति कर्तृत्वेन कारणत्वनिश्चायकानुकूलतर्कानवतारेणाप्रयोजकत्वमिति नैयायिकैरिष्यते तथा च प्रकृतेऽनुकूलतर्काभावादप्रयोजकत्व स्यादिति शक्यं शङ्कितुम्, तथापि प्रकृते निरुपाधिसहचारस्यैवानुकूलतर्कस्य सत्त्वाभा अप्रयोजकत्वमित्यत्र तात्पर्यं द्रष्टव्यम्। ईश्वरसाधकानुमानखण्डनं तु मीमांसकेन कार्यत्वावच्छिन्ने कर्तृत्वेन हेतुतारूपानुकूलतर्क खण्डनेनैव विधेयम्, घटादौ कुलालादेर्विशिष्यहेतुत्वावश्यकत्वे सामान्यतः कार्यत्वावच्छिन्ने कर्तृत्वेन हेतुत्वे मानाभावात्, 'यदि क्षेपयो' इत्यादिन्यायस्य निर्युक्तिकत्वादन्यथा करणस्याप्येकस्य सिद्ध्यापत्तेः, यत्तु घटत्वावच्छिन्नेऽपि न कुलालत्वादिना कुला लादिकृतित्वादिना वा हेतुत्वं स्वण्डघटाद्युत्पत्तिकाले कुलालादिकृतेरसत्त्वात् किन्तु कर्तृत्वेन कृतित्वेन चेतीश्वरसिद्धिरिति दीधि तिकृतोक्तं तदयुक्तं, कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन तत्कालेऽपि सत्त्वात्, वैशेषिकनये श्यामघटादिनाशो त्तरं रक्तघटाद्युत्पत्तिकाले आरम्भकपरमाणुद्वयसंयोगद्व्यणुकादिनाशेऽपि पूर्वसंयोगादिध्वंसानामुत्तरसंयोगादौ कालोपाधितयाऽपि मनकत्वात्, तत्कालेऽपि कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगेन विद्यमानत्वाविरोधादन्यथा दण्डादिहेतुताया अपि

दुपपन्नत्वात्, पक्षपरिच्छेदे विनाशीपदार्थत्वेन सत्त्वेन वा हेतुत्वे सम्भवति व्यापकधर्मेण कृतित्वेन कृतिमत्त्वेन वा हेतुत्वायोगादिति दिक्। हेत्वसिद्धिपरिहारमाह भाष्यकृत्—'स्वभावेत्यादि' इत्यनुमानमुत्सारयतीति (०४-२-८) इति एवमनुमानमात्रमुच्छेदयतीत्यर्थः, अत्रानुमानोत्सारकत्वम् अनुमानप्रमाणं तत्र यद्यपि हेत्वसिद्धेर्नत्वसिद्धस्य हेतोस्तथापि 'सर्वि नाम हि' इतिन्यायानुसरणाद्दोषः, यावानिति तथा च मीमांसकस्यापि पर्यायत्वादिना धर्मादेरनेकक्षणस्थायित्वरूपधर्मिकरानुमितौ सर्वोपसंहारेण व्याप्तिग्राहकस्यावश्यानुसरणीयत्वात्तस्य चानुमानरूपत्वाद्विप्रकर्षिणामननुमेयत्वे सामान्यव्याप्तिमूलकानुमित्यनुपपत्तिरित्यर्थः। अविप्रकर्षिणामिति' आनर्थक्यादिति प्रत्ययादिना सिद्धौ तस्यां तत्प्रतिपत्त्यै नानुमितेरभ्यासवत्त्वादित्यर्थः। तथा चाप्रत्यक्षीभूतव्याप्यहेतुव्यक्तिकव्याप्तिमूलानुमितेरप्यनुपपत्तिरित्यनुमानमात्रोच्छेदो व्यक्त एव तद्रूपेण विप्रकर्षिणामप्यवश्यमनुमेयत्वमभ्युपगन्तव्यमिति नासिद्धता हेतोरित्याह—'सत्त्वादिनेति' इतः पूर्वं तथा चेति शेषः। हेतुरूपस्यानिष्टप्रसङ्गे योजितत्वेनेष्टसिद्धिर्हेतोरित्यमेव तत्रावश्यथा हेत्वाकाङ्क्षानुपरमापत्तेरिति ध्येयम्। अनवयवेनेति (१४-२-१) कारत्स्न्येनेत्यर्थः। इतो ततो धर्मादीनामिति (०४-२-९) आगमैकगम्यानां धर्मादिपदार्थानामनुमेयत्वासिद्धत्वेऽप्यनुमानमात्रोच्छेदकत्वं पृथगवस्थितेऽनुमेयेऽप्यनुमानप्रवृत्तेरसत्त्वात्वादित्यर्थः। तथा, तस्यानुमेयेऽर्थे व्यवस्थानादिति (०४-२-१०) तस्यानुमानस्य, व्यवस्थानाद्धर्माद्यसत्त्वात्। 'एतेनेत्यादि' एतेन विप्रकर्षिणामनुमेयत्वव्यवस्थापनेन, आगमसिद्धमिति (१९-१-७) यद्यपि विप्रकर्षिणामेवार्थानां पक्षत्वे आगमसिद्धमप्रमाणमिति तन्निषेधोऽयुक्तः। 'प्रमाणमेव प्रतिपित्सत' इति न्यायानामपि पदार्थस्यापरिच्छेदेन प्रत्ययत्वमापन्ने

ऽयमाक्षेपपरिहारप्रतुरस्र इति मन्तव्यम् । अनुमेयत्वहेतोरर्थान्तरेणाप्युभयवादिसिद्धतां प्रदर्शयन्नज्ञानासिद्धिं परिजिहीर्षुराह 'अथवाऽनुमेयत्व' (०५-१-८) मित्यादि, न हेतोरिति (९५-१-११) सर्वथैकान्तेषु श्रुतज्ञानाधिगम्यत्वमस्ति प्रत्यक्षत्वं च नास्तीति हेतोर्व्यभिचारित्वं नोद्भावनीयम् । यतस्तेषां दृष्टेष्टबाधितत्वमस्ति अबाधितश्रुतज्ञानविषयत्वं च हेतुर्विवक्षितः स च श्रुताज्ञानविषये नास्तीति, एतेन 'अत्यन्तासत्यपि' इतिन्यायेन शाब्दबोधविषये शशशृङ्गादावपि न व्यभिचार इत्युक्तं भवति, स्थानत्रयाविसंवादि (१२) सूक्ष्मान्तरितदूरस्थलत्रयेऽपि विसंवादरहितम्, अप्रयोजकत्वशङ्कानिरासपरस्तेऽनुमेया इत्यादि र्माप्यग्रन्थस्तत्र मीर्व निरुपाधिसहचार एव ज्ञानं क्वचिदाश्रितं गुणत्वादित्याद्यनुमानसहस्रे तस्येव तर्कस्य सम्भवाद्वाध कादिरपि तस्यैवोपजीव्यत्वादिति ध्येयम् । यत्र (९१-२-८) सर्वज्ञे साध्ये, तं सर्वज्ञम्, कथमिति न कथञ्चिद् त्ययः । न चोक्तदिशा सत्प्रतिपक्षावतारादस्य हेत्वाभासत्वमित्यपि शङ्कनीयम् । एकत्र साध्यतदभावसाधकहेतुद्वयोपनिपात एव तदभिधानात्, सूक्ष्माद्यर्थानां प्रत्यक्षत्वे साध्ये तदभावसाधकहेत्वनुत्थानात् सूक्ष्माद्यर्थसाक्षात्कारिणोऽसिद्धौ तन्नास्ति त्यसाधकस्य चाश्रयाऽसिद्धत्वादिति भावः । दिग्नागमतमालम्ब्य शङ्कते । 'ननु च सर्वज्ञस्येत्यादि (९५ २-१०)' अनुमानमात्रोच्छेदकत्वादयं विकल्पो नाश्रयणीय इत्याशयवाननुचरयति स हि तावदेवमित्यादिना न सम्प द्यत (९५-२-१४) इति न साक्षात्कारजनकप्रत्यासत्त्याश्रयो भवतीत्यर्थः । तेन च कश्चित् सम्बन्धमासाद्य न चाक्षः प्रवर्तना माचाद्रूप्यचाक्षुषादिजनकविलक्षणचक्षुःसंयोगादिरूपव्यापारजननाभावादित्यर्थः । 'किमिन्द्रियेणेवान्तःकरणे नेति' (९७-२-३) साक्षात्कारत्वावच्छिन्नं प्रतीन्द्रियत्वेनेव जन्यज्ञानत्वावच्छिन्नं प्रति मनस्त्वेनापि हेतुत्वाभावात्

योगजधर्मानुगृहीतात्मन एव साक्षात् धर्माधर्मदर्शित्वमित्यादिति भावः । न च भवत्मादिजन्यतावच्छेदिका योगजजन्यताव च्छेदिका च तत्तज्ज्ञाननिष्ठामानसत्वव्याप्या जातिः कल्प्यत इति योगिज्ञानं मानसमेवेत्यपि वक्तुं युक्तम् । मानसमात्र स्याः सर्वापेक्षया दुर्बलत्वेन चाक्षुषादिसामग्रीकाले तदनुत्पत्त्यापत्तेर्योगितरस्वरसतज्ज्ञानेतरत्वस्यापि चाक्षुषसामग्र्यादि प्रतिबध्य तावच्छेदकोटौ दाने च महागौरवात्, किञ्चैवं योगजधर्मानुग्रहस्य योगिन आत्मनि सदा सत्त्वेन तत्तज्ज्ञानेतरज्ञानस्य कदाप्य नुत्पत्तिप्रसङ्गस्तथा चापसिद्धान्तः परेषां ध्यानस्तैमित्यदशायामेव तैस्तज्ज्ञानस्यान्यदा च योगिनां चाक्षुषादिज्ञानस्याभ्युप गमात्, एतेन योगान्यमानसत्वं चक्षुरवच्छेदकतया समानीतजातिविशेषवतां सुखदुःखानामिव तत्तज्ज्ञानेतरज्ञानप्रतिबन्धक तावच्छेदकतया समानीतजातिविशेषवतः समाधिविशेषस्योपजकत्वकल्पोऽपि निरस्तः; अन्तश्चाक्षुषादिसामग्रीप्रतिबन्धकतायां तदुपेक्षकत्वकल्पनापेक्षया तस्यैन्द्रियकज्ञानमात्रप्रतिबन्धकत्वकल्पन एव लाघवात्, एवं च योगजधर्मानुगृहीतात्मन एव साक्षात् धर्माधर्मदर्शित्वमिति जैनाभ्युपगम एव श्रेयान् सकलकलङ्कराहित्यव्यवस्थितेः । एवं हि तत्तदात्मसाक्षात्कारे तत्त दात्मत्वे स्वात्म्यपरिहितोपरमाने च समाधिविशेषत्वेन हेतुत्वेन गौरवं सर्वविषयकत्वस्य केवलज्ञाने समाधावस्मिन्नेव छिन्नेस्तस्य कस्यचिदपि कार्यतावच्छेदकत्वात् निखिलज्ञानस्यैव निरवच्छिन्नप्रकारताकज्ञानत्वं तु न समाधिविशेषजन्यतावच्छेदकम्, प्रमाणादिविषयाभावात्, निरवच्छिन्ननिखिलविशेषविषयताकज्ञानत्वस्य कार्यतावच्छेदकत्वे विनिगमनाभावादिति दिक् 'प्रत्यक्षसामान्येनेति' (०७-१-७) न चैवं सामान्यलक्षणप्रत्यासत्तिजन्यप्रत्यक्षविषयतया धर्माधर्माणां सिद्धसा धनम्, तदनभ्युपगमात्, तदुत्पन्नत्वं वा प्रत्यक्षविशेषण देयमिति न दोष इत्यभिप्रायम् । यदि च भक्त्यानुमाने द्रव्यार्थतया

प्रत्यक्षत्वेन सिद्धसाधनमुद्देश्यासिद्धिर्वा विशेष्यप्रत्यक्षत्वे तु साध्ये व्याप्यग्रहः । अनुमितमात्रनष्टेऽर्थे विधिविषयप्रत्यक्षत्वस्य सिद्धेरप्रयोजकत्वं चेति विभाव्यते तदा प्रत्यक्षत्वं सर्वांशनिरावरणत्वमपि किञ्चिदंशनिरावरणत्वमपि तस्मादालोकत्ववत् व्यतिरेके घटत्वादिवदित्यादिना सर्वविषयकज्ञानवत्पुरुषधौरेयसिद्धिरित्यत्र तात्पर्यमिति दिक् ॥ ५ ॥

## स त्वमेवासि निर्दोषो युक्तिशास्त्राविरोधिवाक् । अविरोधो यदिष्टं ते प्रसिद्धेन न बाध्यते ॥ ६ ॥

दोषास्तावदज्ञानरागद्वेषादय उक्ताः । निष्क्रान्तो दोषेभ्यो निर्दोषः । प्रमाणबलात्सिद्धः सर्वज्ञो वीतरागश्च सामान्यतो यः स त्वमेवार्हन् युक्तिशास्त्राविरोधिवाक्त्वात् । यो यत्र युक्तिशास्त्राविरोधिवाक् स तत्र निर्दोषो दृष्टो, यथा क्वचिद्व्याध्युपशमे भिषग्वरः । युक्तिशास्त्राविरोधिवाक् च भगवान् मुक्तिसंसारतत्कारणेषु तस्मान्निर्दोष इति निश्चयः । युक्तिशास्त्राभ्यामविरोधः कुतो भवतः सिद्धो ऽनवयवेनेति चेद्यस्मादिष्टं मोक्षादिकं ते प्रसिद्धेन प्रमाणेन न बाध्यते । तथा हि । यत्र यस्याभिमतं तत्त्वं प्रमाणेन न बाध्यते स तत्र युक्तिशास्त्राविरोधिवाक् । यथा रोगस्वास्थ्यतत्कारणतत्त्वे भिषग्वर । न बाध्यते च प्रमाणेन भगवतोऽभिमतं मोक्षसंसारतत्कारणतत्त्वम् तस्मात्त्वं युक्तिशास्त्राविरोधिवाक् । इति विषयस्य युक्तिशास्त्राविरोधित्वसिद्धेर्विषयिण्या भगवद्वाचो युक्तिशास्त्राविरोधित्वसाधनम्। कथमत्र कारिकायामनुपात्तो भिषग्वरो दृष्टान्तः कथ्यते इति चेत् स्वयं ग्रन्थकारेणान्यत्राभिधानात्, "त्वं शम्भवः संभवतर्षरोगैः सन्तप्यमानस्य जनस्य लोके । आसीरिहाकस्मिक एव वैद्यो वैद्यो यथा नाथ रुजां प्रशान्त्यै" ॥ १ ॥ इति स्तोत्रप्रसिद्धेः । इह दृष्टान्तावचनं तु संक्षेपोपन्यासात विरुध्यते, अन्यथानुपपन्नत्वनियमैकलक्षणप्रामाण्यप्रदर्शनार्थं वा । तत्र भगवतोऽभिमतं मोक्षतत्त्वं तावन्न प्रमाणेन बाध्यते, प्रत्यक्षस्य तद्बाधकस्यायोगात् । नास्ति कस्यचिन्मोक्षः, सदुपलम्भकप्रमाणपञ्चकाविषयत्वात् कूर्मरोमादिव

रित्यनुमानेन न बाध्यते इति चेत् न, मोक्षस्यानुमानादागमाच्च प्रसिद्धप्रामाण्यादस्तित्वव्यवस्थापनात्। कश्चिद्दोषावरणक्षयस्यैवानन्तज्ञानादिस्वरूपलाभफलस्यानुमानागमप्रसिद्धस्य मोक्षत्वात्, "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः" इति वचनात्। तत एव नागमेनापि मोक्षतत्त्वं बाध्यते, तस्य तत्सद्भावावेदकत्वव्यवस्थितेः। तथा मोक्षकारणतत्त्वमपि न प्रमाणेन विरुध्यते प्रत्यक्षतोऽकारणकमोक्षप्रतिपत्तेरभावात्तेन तद्बाधनायोगात्। नानुमानेनापि तद्बाधनं ततो मोक्षस्य कारणवत्त्वसिद्धेः। सकारणको मोक्षः, प्रतिनियतकालादित्वात् पटादिवत्। तस्याकारणकत्वे सर्वदा सर्वत्र सर्वस्य सद्भावानुषङ्गः परापेक्षारहितत्वादिति, नागमेनापि मोक्षकारणतत्त्वं बाध्यते तस्य तत्साधकत्वात् "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति वचनात्। तथा संसारतत्त्वमपि न प्रसिद्धेन बाध्यते, प्रत्यक्षत संसाराभावासिद्धेस्तस्य तद्बाधकत्वाघटनात्। स्वोपात्तकर्मवशादात्मनो भवान्तरावाप्तिः संसारः। स न प्रत्यक्षविषयो येन प्रत्यक्षं तं बाधेत। अनुमानं तद्बाधकमिति चेत् न, तदभावप्रतिबद्धलिङ्गाभावात्। गर्भादिमरणपर्यन्तचैतन्यविशिष्टकायात्मनः पुरुषस्य जन्मनः पूर्वं मरणाच्चोत्तरं नास्ति भवान्तरम् अनुपलब्धेः खपुष्पवत्, इत्यनुपलम्भः संसाराभावसाधकः संसारतत्त्वबाधक इति चेत्, न तस्यासिद्धेः। प्राणिनामाद्यं चैतन्यं चैतन्योपादानकारणकं, चिद्विवर्तत्वान्मध्यचैतन्यविवर्तवत्। तथाऽन्त्यचैतन्यपरिणामश्चैतन्यकार्यः तत एव तद्वत्। इत्यनुमानेन पूर्वोत्तरभावोपलम्भाच्चोक्तसंसारतत्त्वसिद्धेः। गोमयादेरचेतनादचेतनस्य वृश्चिकादेरुत्पत्तिदर्शनात्तेन व्यभिचारी हेतुरिति चेत् न, तस्यापि पक्षीकरणात्। वृश्चिकादिशरीरस्याचेतनस्यैव गोमयादेः सम्मूर्छनं, न पुनर्वृश्चिकादिचैतन्यविवर्तस्य, तस्य पूर्वचैतन्यविवर्तादेवोत्पत्तिप्रतिज्ञानात्। कल्पितरमणीचित्तेन चित्ताद्यनुपादानेन व्यभिचारः साधनस्येत्यपि मनोरथमात्रं, तस्य प्रमाणतोऽप्रसिद्धत्वात्

१ दोषावरणयोर्हानिरित्याद्यनुमानादिना

निरन्वयक्षणक्षयस्य प्रतिक्षेपात् । ननु च यथायं पश्चिमाग्निरग्निमिन्धनोत्थोऽनग्निपूर्वको दृष्टः परस्त्वग्निपूर्वक एव, तथायं चैतन्यं कायाकारपरिणतभूतेभ्यो भविष्यति, परं तु चैतन्यपूर्वकं, विरोधाभावात् । इति कश्चित्सोऽप्यस्वस्थिति स्वपक्षघातिनी जातिरेव, चित्त्वप्रवर्तकस्य हेतोः साध्येन व्याप्तेरकल्पनात् । प्रथमपश्चिमाग्नेरनन्युपादानस्य सजातीयान्यजातीयोपादानस्योपपत्तेः पृथिव्यादिभूत चतुष्टयस्य तत्त्वान्तरभावविरोधः । तथा हि । येषां परस्परमुपादानोपादेयभावस्तेषां न तत्त्वान्तरत्वम् । यथा क्षितिविवर्तानाम् । परस्परमुपादानोपादेयभावश्च पृथिव्यादीनाम् । इत्येकमेव पुद्गलतत्त्वं पृथिव्यादिविवर्तमवतिष्ठेत । अथ क्षित्यादीनां न परस्परमुपादानोपादेयभावः, सहकारिभावोपगमात् । कथमपावकोपादानः प्रथमः पश्चिमपावकः प्रसिद्धस्तथायमचेतनपूर्वकं प्रथमचैतन्यं प्रसज्येत ? यथैव हि प्रथमाविर्भूतपावकादेस्तिरोहितपावकान्तरादिपूर्वकत्वं तथा गर्भचैतन्यस्याविर्भूतस्वभावस्य तिरोहितचैतन्यपूर्वकत्वमिति किम व्यवस्था स्यात् ? स्यान्मतं, सहकारिमात्रत्वेन प्रथमपश्चिमाग्नेरुपजननोपगमात्तिरोहितान्यान्योपादानत्वमसिद्धमिति, तदसत्, अनुपादानस्य कस्यचिदुपजननादर्शनात् । शब्दविद्युदादेरुपादानादर्शनाद्दोष इति चेत्, न, शब्दादिः सोपादान एव, कार्यत्वात्, पटादिवदित्यनुमानात्तस्यादृष्टोपादानस्यापि सोपादानत्वस्य साधनात् । नन्वस्तु सर्वोऽप्यन्यान्तरोपादान एव सर्वस्य सजातीयोपादानत्वाप्रसिद्धेः । चेतनस्य तु चेतनान्तरोपादानत्वनियमो न युक्तः, तस्य भूतोपादानत्वघटनात् भूतचेतनयोः सजातीयत्वात्तत्त्वान्तरत्वासिद्धेरिति चेत्, न, तयोर्भिन्नलक्षणत्वात्तत्त्वान्तरत्वोपपत्तेः; तोयपावकयोरपि तत एव परैस्तत्त्वान्तरत्वसाधनात् । तथा हि । तत्त्वान्तरं भूताच्चैतन्यं, तद्भिन्नलक्षणत्वान्यथानुपपत्तेः । न चायमसिद्धो हेतुः क्षित्यादिभूतेभ्यो रूपादिसामान्यलक्षणेभ्यः स्वसंवेदनलक्षणस्य चैतन्यस्य तद्भिन्नलक्षणत्वसिद्धेः । न हि भूतानि स्वसंवेदनलक्षणानि, अस्मदाद्यनेकप्रतिपत्तृप्रत्यक्षत्वात् । वस्तुतः स्वसंवेदनलक्षणं तत्र तथा प्रतीतेः, यथा

ज्ञानम् । यथा च सुखादि तस्मात् स्वसंवेदनलक्षणमपि । अनेकयोगिप्रत्यक्षेण सुखादिसंवेदनेन व्यभिचारी हेतुरिति न शङ्कनीयम् तस्य [illegible] । ज्ञानस्य स्वसंवेदनलक्षणत्वमसिद्धमिति चेत्, न बहिरर्थपरिच्छेदकत्वान्यथानुपपत्त्या तस्य स्वसंवेदनलक्षणत्वसिद्धेः । योऽस्वसंवेदनलक्षणः स न बहिरर्थस्य परिच्छेदको दृष्टो यथा घटादिरिति विपक्षे बाधकप्रमाणसद्भावसिद्धेः हेतोरन्यथानुपपत्तिः । प्रदीपादिनानेकान्त इति चेत्, न, तस्य जडत्वेन बहिरर्थपरिच्छेदकत्वासम्भवात् बहिरर्थपरिच्छेदकज्ञानोत्पत्तिकारणत्वात्तु प्रदीपादेश्च चक्षुरादेरिव परिच्छेदकत्वोपचारात् । न चोपचरितेनार्थपरिच्छेदकत्वेन प्रदीपादिना मुख्यस्यार्थपरिच्छेदकत्वस्य हेतोर्व्यभिचारचोदनं विचारचतुरचेतसां कर्तुमुचितम् अतिप्रसङ्गात् । स्वरूपमात्रपरिच्छेदनव्यापृते सुखादिज्ञाने बहिरर्थपरिच्छेदकत्वाभावात्सभागव्यापको हेतुरिति चेत् न, तस्यापि स्वतो बहिर्भूतसुखादिपरिच्छेदकत्वाद्बहिरर्थपरिच्छेदकत्वसिद्धेः कुम्भादिवेदनस्यापि सर्वथा स्वबहिर्भूतार्थपरिच्छेदकत्वानुपपत्तेः सदात्मनः कुम्भादेः संवेदनत्वमेव प्रतीतेः, अन्यथा तदसत्त्वप्रसङ्गात् । कथञ्चित्स्वबहिर्भूतत्वं तु सुखादिसंवेदनात्सुखादेरपि प्रतीतमेव, सुखादितत्संवेदनयोः कारणादिभेदाद्भेदप्रसिद्धेः । यदि घटादिज्ञानवत् सुखादिज्ञानस्यापि स्वबहिर्भूतार्थपरिच्छेदकत्वात्तदन्यस्य विज्ञानस्यासम्भवात् क्व तस्य संवेदकं ज्ञानं स्यादिति चेत्, न, तस्यैव घटादिसुखादिज्ञानस्य स्वरूपसंवेदकस्य सतः परसंवेदकत्वोपगमात् स्वसंवेदनसिद्धेः, अपरस्य तदभावात्मकत्वात् सर्वसंवेदनस्य । स्वात्मनि क्रियाविरोधान्न स्वरूपसंवेदनं ज्ञानमिति चेत् का पुनः क्रिया स्वात्मनि विरुध्यते ? न तावत्सर्वथा, भवनादिक्रियायाः क्वचिदप्यभावप्रसङ्गात् । परिस्पन्दात्मिका क्रिया स्वात्मनि विरुद्धेति चेत्, का पुनः क्रियायाः स्वात्मा ? क्रियात्मैवेति चेत् कथं तस्यास्तत्र विरोधः ? स्वरूपस्य विरोधकत्वायोगात् । अन्यथा सर्वभावानां स्वरूपविरोधान्निःस्वरूपताप्रसङ्गात् । विरोधस्य द्विष्ठत्वाच्च न क्रियायाः स्वात्मनि

विरोधः । क्रियावदात्मा क्रियायाः स्वात्मेति चेत्कथं तत्र विरोधः, ? क्रियावत्येव सर्वस्याः क्रियायाः प्रतीतेरविरोधसिद्धेः । अथ क्रिया, करणं निष्पाद्यं स्वात्मनि विरुद्धमित्यभिमतं तर्हि न ज्ञानं स्वरूपं निष्पादयतीत्युच्यते येन विरोधः स्यात् । इत्यसिद्धः स्वात्मनि क्रियाविरोधः स्वावरणविश्लेषाभिव्यज्यमानस्य ज्ञानस्य स्वपरप्रकाशनरूपत्वात् प्रदीपस्य स्वपरोद्योतनरूपत्ववत् । यथैव हि रूपज्ञानोत्पत्तौ प्रदीपः सहकारित्वाच्चक्षुषो रूपस्योद्योतकः कथ्यते तथा स्वरूपज्ञानोत्पत्तौ तस्य सहकारित्वात्स्वरूपोद्योतकोऽपि । ततो ज्ञानं स्वपररूपयोः परिच्छेदकम् तत्राज्ञाननिवृत्तिहेतुत्वान्यथानुपपत्तेः । इत्यविरुद्धं पश्यामः स्वसंवेदनमन्वयस्य स्वस्य लक्षण भूतासम्भवीति भिन्नलक्षणत्वं तयोः सिद्धमेव । तच्च सिद्ध्यद्द्रव्यान्तरत्वं साधयति, तथाऽसजातीयत्वम् । तदप्युपादानोपादेयभावाभाव तयोस्तत्प्रयोजकत्वात् । तदेवं भूतचैतन्ययोर्नास्त्युपादानोपादेयभावो, विभिन्नलक्षणत्वात् । इति व्यापकविरुद्धव्याप्तोपलब्धिः, उपादानोपादेयभावव्यापकस्य सजातीयत्वविशेषस्य विरुद्धेन द्रव्यान्तरभावेन व्याप्ताद्भिन्नलक्षणत्वाद्विधेर्व्याप्याभावसाधनात् । नन्वत्र सजातीयत्वविशेषस्योपादानोपादेयभावव्यापकत्वमसिद्धम्, विजातीयत्वाभिमतयोः पयःपावकयोः सत्त्वादिना सजातीययोरपि तदभ्युपगमात् कथञ्चिद्विजातीययोरपि मृत्पिण्डपटाकारयोः पार्थिवत्वादिना विशिष्टसामान्येन सजातीययोरुपादानोपादेयभावसिद्धेः । कथं तर्हि सजातीयत्वविशेषस्य द्रव्यान्तरभावेन विरोध इति चेत्तस्यान्तरभूतयोस्तदनुपलम्भात्, पूर्वाकारापरित्यागाजहद्वृत्तोत्तराकारान्वयप्रत्ययविषयस्योपादानत्वप्रतीतेः, परित्यक्तपूर्वाकारेण द्रव्येणात्मसात्कृतमापोत्तराकारस्योपादेयत्वनिर्णीतावन्यथातिप्रसङ्गात् । कथं तत्त्वान्तरभावेन भिन्नलक्षणस्य व्याप्तमिति चेत्, तदभावेऽनुपपद्यमानत्वात् । किण्वादिमदिरादिपरिणामयोस्तत्त्वान्तरभावेऽपि भिन्नलक्षणत्वस्य दर्शनात्तस्य तेनाव्याप्तिरिति चेत्, न, तयोर्भिन्नलक्षणत्वासिद्धेः, किण्वादेरपि मदजननशक्तिसद्भावान्मदिरादिपरिणामवत् । सर्वथा

मदजननशक्तिविकल्पस्ते हि किण्वादेर्मदिरादिपरिणामस्तावपि चैतन्यमसङ्गः । नन्वेवं भूतान्तरत्वयोरपि भिन्नलक्षणत्वं मा भूत्, समानपरिणतभूतविशेषाभावात् प्रागपि क्षित्यादिभूतानां चैतन्यलक्षणभिन्नाकारत्वेन तत्त्वान्तरत्वमपि चैतन्योद्भूतिविरोधादिति न मतमस्येवम् चेतनस्यानाद्यनन्तत्वप्रसिद्धेरात्मद्रव्यादिभिन्नप्रतिष्ठानात् । न चैवं चैतन्यं भूतविवर्तः, क्षित्यादितत्त्वस्यापि तद्विवर्तत्वप्रसङ्गात् अनाद्यनन्तत्वाविशेषात् । ततो भिन्नलक्षणत्वं तत्त्वान्तरत्वेन व्याप्तं भूतचैतन्ययोस्तत्त्वान्तरस्य साधयत्येव । इति चैतन्यपरिणामोपादान पर्यायचैतन्यपरिणामः प्राग्भिन्नामन्यचैतन्योपादेयाद् जन्मान्तरपर्यायचैतन्यपरिणामः सिद्ध । पूर्वभवपरित्यागेन भवान्तरपरिग्रह एव च संसारः । इति प्रसिद्धेन प्रमाणेन संसारतत्त्वं न बाध्यते, नानुमानेन, नाप्यागमेन, तस्य तत्प्रतिपादकतया श्रुतेः "संसारिणस्त्रसस्थावराः" इति वचनात् । तथा संसारोपायतत्त्वमपि न प्रसिद्धेन बाध्यते, प्रत्यक्षस्य तदबाधकत्वात् । निर्हेतुकः संसारोऽनाद्यनन्तत्वादाकाशवदित्यनुमानेन बाध्यते इति चेत्, न, पर्यायार्थादेशात्संसारस्यानाद्यनन्तत्वासिद्धेः द्रव्यार्थस्यापि साध्यसाधनविकलत्वात्, द्रव्यार्थादेशात्तु तस्य तथासाधने सिद्धसाध्यतानुपपत्तेः । सुखदुःखादिभावविवर्तनलक्षणस्य संसारस्य द्रव्यक्षेत्रकालभावभवविशेषहेतुकत्वप्रतीतेश्च नाहेतुकसंसारसाधनानुमानमनवद्यम् । इति न किंचिदनुमानं संसारोपायतत्त्वस्य बाधकम् । नाप्यागमः, तस्य तत्साधकत्वात् " मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः" इति वचनात्, बन्धहेतूनामेव संसारहेतुत्वात् । तदेवं मोक्षसंसारतत्कारणतत्त्वं भगवतोऽभिमतं प्रसिद्धेन प्रमाणेन युक्तिशास्त्राभ्यां चाबाध्य सिद्ध्यतो युक्तिशास्त्राविरोधित्वं साधयति, तत्र निर्दोषत्वम् । इति स एव स सर्वज्ञो वीतरागश्च स्तोतुं युक्तो नान्य इत्युच्यते । विप्रकर्ष्यपि भिन्नलक्षणसम्बन्धित्वादिना कस्यचित्प्रत्यक्षं सोऽत्र मतानर्हेव । द्रव्यक्षेत्रकालभावलक्षणतत्त्वसम्बन्धित्वेन विप्रकर्षि परमाण्वादिकम् । तथा वर्तमानप्रत्यक्षप्रतिपत्तिका कालो-

तीतोनागतश्च तत्सम्बन्धित्वेन रावणशङ्खादिः । तथा दर्शनयोग्यादृशात्रिमेषोऽनुपलब्धियोग्यस्तत्सम्बन्धित्वेन मकराकरादि । तद्धि प्रकृष्टसम्बन्धित्वादिना स्वभावकालदेशविप्रकर्ष्येपि कस्यचित्प्रत्यक्षं साधितम् । सोऽत्र भगवानर्हन्नेव, न पुनः कपिलादय इति । एतदुक्तो निश्चितमिति चेत्, अन्येषां न्यायागमविरुद्धभाषित्वात् । ये न्यायागमविरुद्धभाषिणस्ते न निर्दोषा यथा दुर्वैद्यादयः, तथा चान्ये कपिलादय इत्यनुमानान्न्यायागमाविरुद्धभाषिण एव भगवतोऽर्हतो निर्दोषत्वमवसीयते । न चात्र न्यायागमविरुद्धभाषित्वं कपिलादीनामसिद्धं, तदभिमतस्य मोक्षसंसारतत्कारणतत्त्वस्य प्रसिद्धेन प्रमाणेन बाधनात् । तत्र कपिलस्य तावत् "स्वरूपे चैतन्यमात्रेऽवस्थानमात्मनो मोक्षः" इत्यभिमतं तत्प्रमाणेन बाध्यते, चैतन्यविशेषेऽनन्तज्ञानादौ स्वरूपेऽवस्थानस्य मोक्षत्वसाधनात् । न ह्यनन्तज्ञानादिकमात्मनोऽस्वरूपं, सर्वज्ञत्वादिविरोधात् । प्रधानस्य सर्वज्ञत्वादि स्वरूपं, नात्मन इति चेत् न, तस्याचेतनत्वादाकाशवत् । ज्ञानादेरप्यचेतनत्वादचेतनप्रधानस्वभावत्वं युक्तमेवेति चेत्, कुतस्तदचेतनत्वसिद्धिः ? अचेतना ज्ञानादय उत्पत्तिमत्त्वात् घटादिवदित्यनुमानादिति चेत्, न, हेतोरनुभवेन व्यभिचारात्, तस्य चेतनत्वेऽप्युत्पत्तिमत्त्वात् । कथमुत्पत्तिमाननुभव इति चेत्, परापेक्षत्वात् बुद्ध्यादिवत् । परापेक्षोऽसौ बुद्ध्यध्यवसायापेक्षत्वात् ' बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते " इति वचनात् । बुद्ध्यध्यवसितार्थानपेक्षत्वेऽनुभवस्य सर्वत्र सर्वदा सर्वस्य पुंसोऽनुभवप्रसङ्गात् । सर्वस्य सर्वदर्शित्वापत्तेस्तदुपायानुष्ठानवैयर्थ्यमेव स्यात् । यदि पुनरनुभवसामान्यमात्मनो नित्यमनुत्पत्तिमदेवेति मतं तदा ज्ञानादिसामान्यमपि नित्यत्वादनुत्पत्तिमदेवेति व्यभिचारी हेतुः । ज्ञानादिविशेषाणामुत्पत्तिमत्त्वादसिद्ध इति चेत्, तर्ह्यनुभवविशेषाणामप्युत्पत्तिमत्त्वात्तैरनैकान्तिकोऽसौ कथं न स्यात् ? नानुभवस्य विशेषाः सन्तीति चायुक्तं, वस्तुत्वविरोधात् । तथा हि । नानुभवो वस्तु, सकलविशेषरहितत्वात् खरविषाणवत् । नात्मनानेकान्तः, तस्यापि सामान्यविशेषात्मकत्वादन्यथा तद्वदवस्तुत्वापत्तेः । कालात्य

यापदिष्टश्चायं हेतुः, ज्ञानादीनां स्वसंवेदनप्रत्यक्षेणाचेतनत्वप्रसिद्धेरध्यक्षबाधितपक्षानन्तरं प्रयुक्तत्वात् । अथ चेतनसंसर्गादचेतनस्यापि ज्ञानादेश्चेतनत्वप्रतीतिः प्रत्यक्षतो भ्रान्तैव । तदुक्तं "तस्मात्तत्संसर्गादचेतनं चेतनावदिव लिङ्गम्" इति । तदप्यपरीक्षिताभिधानम्, शरीरादेरपि चेतनत्वप्रतीतिप्रसङ्गाच्चेतनसंसर्गाविशेषात् । शरीराद्यसंभवी ज्ञानादेरात्मना संसर्गविशेषोऽस्तीति चेत् स कोऽन्योऽन्यत्र कथं चित्तादात्म्यात् तदुत्पत्त्यादिविशेषस्य शरीरादावपि भावात् । ततो भावचेतना ज्ञानादयः स्वसंविदितत्वात् अनुभववत् । स्वसंविदितास्ते परसंवेदनान्यथानुपपत्तेः इति प्रतिपादितप्रायम् । तथा चात्मस्वभावा ज्ञानादयः, चेतनत्वात्, अनुभववदेव । इति न चैतन्यमात्रेऽवस्थाने मोक्षः अनन्तज्ञानादिचैतन्यविशेषेऽवस्थानस्य मोक्षत्वप्रतीतेः । "एतेन बुद्ध्यादिविशेषगुणोच्छेदादात्मस्वरूपमात्रेऽवस्थानं मुक्तिः" इति कणभक्षाक्षपादमतं प्रमाणेन बाधितमुपदर्शितं, पुंसोऽनन्तज्ञानादिस्वरूपत्वसाधनात्, स्वरूपोपलब्धेरेव मुक्तित्वसिद्धेः । स्यान्मतं "न बुद्ध्यादयः पुंसः स्वरूपं ततो भिन्नत्वात्, अर्थान्तरवत् । ततो भिन्नास्ते तद्विरुद्धधर्माधिकरणत्वात् घटादिवत् । तद्विरुद्धधर्माधिकरणत्वं पुनस्तेषामुत्पादविनाशधर्मकत्वादात्मनोऽनुत्पादाविनाशधर्मकत्वात्प्रसिद्धम्" इति तदयुक्तं, विरुद्धधर्माधिकरणत्वेऽपि सर्वथा भेदासिद्धेर्मेचकज्ञानवदाचरणात् । एकं हि मेचकज्ञानमनेकश्च तदाकारो नीलादिप्रतिभासविशेष इत्येकत्वानेकत्वविरुद्धधर्माधिकरणत्वेऽपि मेचकज्ञानतत्प्रतिभासविशेषयोर्न भेदोऽभ्युपगम्यते, मेचकज्ञानत्वविरोधात् । यदि पुनर्युगपदनेकार्थग्राहि मेचकज्ञानमेकमेव न तत्रानेकप्रतिभासविशेषसम्भवो यतो विरुद्धधर्माधिकरणत्वमभेदेऽपि स्यादिति मतं तदापि तदेकमनेकया शक्त्यानेकमर्थं युगपद् गृह्णाति किं चैकया ? यद्यनेकया तदेकमनेकशक्त्यात्मकमिति स एव विरुद्धधर्माध्यासः । ततोऽनेकशक्तेरनेकत्वधर्माधारभूतायाः पृथक्त्वात् तस्य त्वेकत्वधर्माधारत्वान्नैकत्र विरुद्धधर्माध्यास इति चेत्, कथमनेका शक्तिस्तस्येति व्यपदिश्यते ? ततो भेदाद्धर्मान्तरवत् । सम्बन्धादिति चेत्, तर्हि तदनेकया शक्त्या संबन्धमा-

ममनेकेन रूपेण कथमनेकरूपं न स्यात् ? तस्याप्यनेकरूपस्य ततोऽन्यत्वात्तदेकमेवेति चेत्, कथं तत्तस्येति व्यपदेष्टव्यम् ? सम्बन्धादिति चेत्, स एव दोषोऽनिवृत्तश्च पर्यनुयोगोऽनवस्थानात्। यदि पुनरेकेनैव रूपेणानेकया शक्त्या संबध्यते तदानेकविशेषणत्वविरोधः। पीतग्रहणशक्त्या हि येन स्वभावेन संबध्यते तेनैव नीलादिग्रहणशक्त्या चेत् पीतग्राहित्वविशेषणमेव मेचकज्ञाने स्यात् नीलादिग्राहित्वविशेषणमिति पीतज्ञानमेव स्यात् न तु मेचकज्ञानम्। यथैकया शक्त्यानेकमर्थं गृह्णातीति द्वितीयविकल्पः समाश्रीयते तदापि सर्वार्थग्रहणप्रसङ्गः। पीतग्रहणशक्त्या ह्येकया यथा नीलादिग्रहणं तथातीतानागतवर्तमानाशेषपदार्थग्रहणमपि केन निवार्येत ? अथ न पीतग्रहणशक्त्या नीलग्रहणशक्त्या वा पीतनीलाद्यनेकार्थग्राहि मेचकज्ञानमिष्यते। किं तर्हि ? नीलपीतादिप्रतिनियतानेकार्थग्रहणशक्त्यैकमेवेति मतं तदा न कार्यभेदः कारणशक्तिभेदव्यवस्थाहेतुः स्यादित्येकहेतुकं विश्वस्य वैश्वरूप्यं प्रसज्येत। तथा चानेककारणप्रतिवर्णनं सर्वकार्योत्पत्तौ विरुध्यते। तदभ्युपगच्छता मेचकज्ञानमनेकार्थग्राहि नानाशक्त्यात्मकमुररीकर्तव्यम्। तेन च विरुद्धधर्माधिकरणेनैकेन प्रकृतहेतोरनैकान्तिकत्वात् ज्ञानादीनामात्मनो भेदैकान्तसिद्धिर्येनात्मनो ज्ञानादिरूपो न भवेत्। निराकरिष्यमाणत्वाच्चातो गुणगुणिनोरन्यतैकान्तस्य, न ज्ञानादयो गुणाः सर्वथात्मनो भिन्नाः शक्याः प्रतिपादयितुं यतोऽशेषविशेषगुणनिवृत्तिर्मुक्तिर्व्यवतिष्ठेत। ननु च धर्माधर्मयोस्तावन्निवृत्तिरात्यन्तिकी मुक्तौ प्रतिपत्तव्या, अन्यथा तदनुपपत्तेः। तन्निवृत्तौ च तत्फलसुखादिनिवृत्तिरवश्यंभाविनी निमित्तापाये नैमित्तिकस्याप्यनुपपत्तेः। मुक्तस्य मनोऽन्तःकरणसंयोगाभावे वा न तत्कार्यस्य सुखादेरुत्पत्तिः। इत्यशेषविशेषगुणनिवृत्तिर्मुक्तौ सिद्धस्त्वेवेति केचित्, तेऽप्यदृष्टहेतुकानां सुखादीनामात्मान्तःकरणसंयोगजानां च मुक्तौ निवृत्तिं ब्रुवाणा न निवार्यन्ते। कर्मक्षयहेतुकयोस्तु प्रशमसुखानन्तज्ञानयोर्निवृत्तिमाचक्षाणास्ते न स्वस्थाः प्रमाणविरोधात्। ततः कथंचित्सुखादिविशेषगुणानां निवृत्तिः कथंचिदनिवृत्तिर्मुक्तौ व्यवति

पायेन च साक्षात्[illegible] न स्यात् ? तस्मादनेकरूपस्य ततोऽन्यस्यात्येकमेवेति चेत् तिमिरमोषितं न्यायागमविरुद्धम् । तत्त्वज्ञानमात्रं न परनिःश्रेयसकारणं, प्रकर्षपर्यन्ता[illegible] अपि पश्चादेकैव [illegible] मिथ्याज्ञानवत् । न चायमसिद्धो हेतुः, सर्वज्ञानामपि कपिलादीनां स्वयं प्रकर्षपर्यन्तावस्थाप्राप्तस्यापि ज्ञानस्य शरीरेण सहावस्थानोपगमात् । साक्षात्सकलार्थज्ञानोत्पत्त्यनन्तरं शरीराभावे कुतोयमाप्तस्योपदेशः प्रवर्तेत ? अशरीरस्याप्तस्योपदेशकरणविरोधादाकाशवत् । तस्यानुत्पन्ननिखिलार्थज्ञानस्योपदेश इति चेत्, न, तस्या प्रमाणत्वशङ्काऽनिवृत्तेरन्याज्ञान( रथ्या )पुरुषोपदेशवत्। यदि पुनः शरीरान्वयानुत्पत्तिर्निःश्रेयसं न गृहीतशरीरनिवृत्तिः । तस्य साक्षात् सकलतत्त्वज्ञानं कारणं न तु गृहीतशरीरनिवृत्तेः, फलोपभोगादुपगमात् । तत्र पूर्वोपात्तशरीरेण सहावतिष्ठमानात्तत्त्वज्ञानादाप्तस्योपदेशो युक्त इति मतं तदा हेतुः सिद्धोऽभ्युपगतस्तावत् । स च परनिःश्रेयसाऽकारणत्वं तत्त्वज्ञानस्य साधयत्येव, भाविशरीरस्येवोपात्तशरीरस्यापि निवृत्तः परनिःश्रेयसत्वात्, तस्य च तत्त्वापेक्ष्यमायात् । फलोपभोगक्षयोपात्तकर्मक्षयापेक्षं तत्त्वज्ञानं परनिःश्रेयसकारणमित्यप्यनालोचिताभिधानं, फलोपभोगस्यौपक्रमिकानौपक्रमिकविकल्पानतिक्रमात् । तस्यौपक्रमिकत्वे सुखदुःखोपक्रमोऽन्यत्र तपोविशेषात् । इति तत्त्वज्ञानतपोऽतिशयहेतुकं परनिःश्रेयसमायातम् । समाधिविशेषादुपात्तासेषकर्मफलोपभोगोपगमाददोष इति चेत्, कः पुनरसौ समाधिविशेषः ? स्थिरीभूतं ज्ञानमेव स इति चेत्, तदुत्पत्तौ परनिःश्रेयसस्य भावे स एवाप्तस्योपदेशाभावः । सकलतत्त्वज्ञानस्यास्थैर्यावस्थायामसमाधिरूपस्योपजनने युक्तोयं योगिनस्तस्योपदेश इति चेत्, न, सकलतत्त्वज्ञानस्यास्थैर्यविरोधात्तस्य कदाचिच्चलनानुपपत्तेः अक्रमस्याखिलपदार्थसंचरणाभावात्, अन्यथा सकलतत्त्वज्ञानत्वासम्भवात्सर्वादिज्ञानवत् । अथ तत्त्वोपदेशदशायां योगिनोपि ज्ञानं विनेयजनप्रतिबोधाय व्याप्रियमाणमपरिचरमसमाधिरूपं पश्चान्निवृत्तसकलव्यापारं स्थिरं समाधिव्यपदेशमास्कन्दतीत्युच्यते तर्हि

विसंवादात् क पुनराश्वासं लभेमहि ? न हि मानवो वीतरागात्पुरुषाद्विशेषः कश्चित्संभवति सुगतादावप्यनाश्वासप्रसङ्गात् तस्य कपिलादिभ्यो विशेषस्थेरानर्थक्यप्रसङ्गात् । न च व्यापारव्याहाराकारविशेषाणां तत्र साङ्कर्यं सिध्यति, विचित्राभिसन्धितानुपपत्तेः, तस्याः पृथग्जने रागादिमत्यपि प्रसिद्धेः प्रक्षीणदोषे भगवति निवृत्तेः तस्य यथार्थप्रतिपादनाभिप्रायतानिश्चयात् । कुतश्चायं सर्वस्य विचित्राभिप्रायतासद्भावो व्यापारादिसाङ्कर्येऽपि निश्चिनुयात् ? शरीरित्वादेर्हेतोः स्वात्मनीवेति चेत्, तत एव सुगतस्यासर्वज्ञत्वनिश्चयोऽस्तु । तत्रास्य हेतोः सन्दिग्धविपक्षव्यावृत्तिकत्वान्न तन्निश्चयः । शरीरी च स्यात्सर्वज्ञश्च, विरोधाभावात्, विज्ञानप्रकर्षे शरीराद्यपकर्षादर्शनादिति चेत्, तत एव सर्वज्ञस्य विचित्राभिप्रायतानिश्चयोऽपि मा भूत्, तत्रापि मोक्षहेतोः सन्दिग्धविपक्षव्यावृत्तिकत्वाविशेषात् । सोऽयं विचित्रव्यापारादिकार्यदर्शनात्सर्वस्य विचित्राभिसन्धितां निश्चिनोति, न पुनः कस्यचित्कथनादिकार्योपलम्भनिश्चयात् सर्वज्ञत्वाद्यतिशयमिति कथमनुन्मत्तः ? कैमर्थक्याच्चास्य सन्तानान्तरस्वसन्तानक्षणक्षयस्वर्गप्रापणशक्त्यादेर्विशेषस्येष्टिः ? विभ्रमस्वभावस्याविशेषात्, चेतनाचेतनरूपस्य चेतनाद्वैतस्य वा विशेषस्य प्रमाणभूतस्य जगद्धितैषिणः शास्तुस्तायिनः शोभनं गतस्य सम्पूर्णं वा गतस्य पुनरनावृत्त्या सुष्ठु वा गतस्य विशेषस्येष्टिः ? सर्वज्ञानाभासाविशेषात् । न चैष वादिनः किञ्चिदनुमानं नाम, मिरमिरचीनामपि बहुलं कार्यस्वभावानियमोपलम्भात्, सति काष्ठादिसामग्रीविशेषे कचिदुपलब्धस्य तदभावे प्रायशोऽनुपलब्धस्य मण्यादिकारणकलापेऽपि संभवात् । तथा शीतो यतः संस्पर्शस्तज्जातीयादरगिति दुर्लभनियमतायां धूमधूमकेत्वादीनामपि व्याप्यव्यापकभावः कथमिव निर्णीयेत ?, धूमः शिशपादादिति व्याप्त्यादेरपि कचिदेव दर्शनात् प्रमाणतां किमिव निःशङ्कं चेतः स्यात् ? तदेतदहस्यैकान्तवादिनो विदग्धमर्कटानामिव स्वमतदूषणम् । ननु च 'काष्ठादिसामग्रीजन्योऽग्निर्यादृशो दृष्टो न तादृशो मण्यादिसामग्रीप्रभव इति यथाक्षीयो यतो दृष्टः स तादृ

ज्ञातेन न पुनरस्मादृशापि यतो धूमपावकयोर्व्याप्यव्यापकभावो न निर्णीयते, तथा तादृशे पूरणे बुद्धयेन व्याप्ते तादृशे न व्यापकेन, यतः शिंशपात्ववृक्षत्वयोरपि व्याप्यव्यापकभावनियमो दुर्लभः स्यात्' इति कश्चित्सोपि प्रतीतेरपलापकः, कार्यस्य तादृशतया प्रतीयमानस्यापि कारणविशेषाविनाभावित्वदर्शनात्। यथैव परीक्षितं कार्यं कारणं नातिवर्तते इति चेत्, सुघटं प्रकृते, व्यापारादिविशेषस्यापि किञ्चिज्ज्ञत्वरागादिमत्त्वसंभविनो भगवतः परीक्षितस्य भगवति ज्ञानाद्यतिशयानतिवृत्तिसिद्धेः। एतेन यथैव परीक्षितं व्याप्यं व्यापकं नातिवर्तते इति ब्रुवतापि सुघटं प्रकृतमित्युक्तं वेदितव्यं, पुरुषविशेषस्वभावस्य व्याप्यस्य सर्वज्ञत्वव्यापकस्वभावानतिक्रमसिद्धेरसद्भावविरोधात्। तयोर्व प्रतिपत्त्युपरामो नानुमानस्येत्यनुकूलमाचरति। अन्यथाप्यमिता धूमादिकमपि परीक्षितुमसमर्था ततो धूमध्वजादिपुरेरपि व्यभिचारदर्शनात्। प्रज्ञाविशेषवतां तु सर्वत्र परीक्षासमर्था यथा धूमादि पावकादिकं न व्यभिचरति तथा व्यापारव्याहाराकारविशेषः कपिलादीनामविद्यमानमपीत्यनुकूलाचरणम्। एवं युक्तिशास्त्राविरोधिवाक्त्वं, भगवतोर्हत एव सर्वज्ञत्वं साधयतीत्यभिधाय तदेवं तत् सुनिश्चितासम्भवद्बाधकप्रमाणत्वमर्हत्येव सर्वज्ञत्वं साधयति नान्यत्रेत्यविरोध इत्यादिना स्पष्टयति, स्यादेतत् दोषः, यतस्मादविरोधः सुनिश्चितासंभवद्बाधकप्रमाणत्वं त्वय्येव यस्मात्त्वमेव स इत्यभिधानसम्भवात्। स एवाविरोधः पुनः सिद्ध इत्यादिकारिका यदिदं ते प्रसिद्धेन न बाध्यते इत्यभिधानात्। तदेतदसत् शासनमुपपद्यते, निराकृतबाधोपि कश्चिद्विप्रतिपत्तेः। न पुनरिच्छाविषयीकृतमिदं, प्रक्षीणमोहे भगवति मोहपर्यायात्मिकायास्तद्विच्छायाः संभवाभावात्। तथा हि। नेच्छा सर्वविदः शासनप्रकाशननिमित्तं, प्रनष्टमोहत्वात्। यस्येच्छा शासनप्रकाशननिमित्तं न स प्रनष्टमोहो यथा किञ्चिज्ज्ञः। प्रनष्टमोहश्च सर्वविद्भगवान्। साधितस्तस्मान्न तस्येच्छा शासनप्रकाशननिमित्तम्। इति केवलव्यतिरेकी हेतुर्निराकृतबाधं साधयति, अव्यभिचारात्। न सर्वविदिच्छामन्तरेण वक्ति वक्तृत्वादस्मदादिवत्, इत्यनेन

निराकृतत्वात्तो विप्रतिषेध इति चेत्, नायं नियमोऽस्ति । तदभ्युपगमे को दोष इति चेत्, नियमाभ्युपगमे सुषुप्त्यादावपि निरभिप्रायप्रवृत्तिर्न स्यात् । न हि सुषुप्तौ गोत्रस्खलनादौ वाग्व्याहारादिहेतुरिच्छास्ति । प्रतिसंविदिताकारेच्छा तदा संभवन्ती पुनः सर्वैव वाञ्छान्तरवत् । न चाप्रतिसंविदिताकारेच्छा संभवति या पश्चाच्च स्मर्यते । पूर्वकालभाविनीच्छा तदा वागादिप्रवृत्तिहेतुरप्रतिसंविदिताकाराऽनुमेया सम्भवत्येवेति चेत्, किं पुनस्तदनुमानम्? विवादाध्यासिता वागादिप्रवृत्तिरिच्छापूर्विका, वागादिप्रवृत्तित्वात्, प्रसिद्धेच्छापूर्वकवागादिप्रवृत्तिवदिति चेत्, न हेतोरप्रयोजकत्वात् । तथाभूतस्य हि जाग्रतोऽनन्यमनसो वा वागादिप्रवृत्तिरिच्छापूर्विकाप्रतिपन्ना देशान्तरे कालान्तरे च तथाभूतस्यैव तत्प्रवृत्तिरिच्छापूर्विका साधयितुं शक्या, न पुनरन्यादृशा, अतिप्रसङ्गात् । न च सुप्तस्यान्यमनस्कस्य वा तत्प्रवृत्तिरिच्छापूर्वकत्वेन व्याप्ताऽवगता, तदवगतेरसंभवात् । सा हि स्वसन्ताने तावन्न संभवति, सुषुप्त्यादिविरोधात् । सुप्तोऽन्यमनस्कश्च प्रवृत्तिमिच्छापूर्विकामवगच्छति (स्वपिति) चेति व्याहतमेतत् । पश्चादुत्थितोऽवगच्छतीति चेत्, इदमपि तादृगेव । स्वयमसुप्तोऽनन्यमनाश्च सुप्तान्यमनस्कप्रवृत्तिमिच्छापूर्वकत्वेन व्याप्तामवगच्छतीति ब्रुवाणः कथमप्रतिहतवचनपथः सचेतोरासीयते? तदनुमानात्तदवगतेरदोष इति चेत्, न, अनवस्थाप्रसङ्गात्, तदनुमानस्यापि व्याप्तिप्रतिपत्तिपुरस्सरत्वात् तद्व्याप्तेरप्यनुमानान्तरापेक्षत्वात्, सुदूरमपि गत्वा प्रत्यक्षतस्तद्व्याप्तिप्रतिपत्तेरघटनात् । एतेन सन्तानान्तरे तद्व्याप्तेरवगतिरपास्ता, अनुमानात्तदवगतावनवस्थानाविशेषात्, प्रत्यक्षतस्तदवगतेरसंभवाच्च । इति नानुमेया सुषुप्त्यादाविच्छाऽस्ति तत्काला पूर्वकाला वा, तदनुमानस्यानुदयात् । तथा च सर्वत्र प्रवृत्तेरिच्छापूर्वकत्वे साध्ये वक्तृत्वादेर्हेतोः सुषुप्त्यादिना व्यभिचारादनियम एव । तस्माच्चैतन्यकरणपाटवयोरेव साधकतमत्वम् । ननु च सत्यपि चैतन्ये करणपाटवे च वचनप्रवृत्तेरदर्शनात्तत्रापि तत्सहकारिकारणमपेक्ष्यते एवेति चेत्, सहकारिकारणान्तरं न वै नियतमपेक्षणीयं, नक्तञ्चरादेः संस्कृतचक्षुषो

सविकल्पकमपि न विचारकं पूर्वापरपरामर्शशून्यत्वादभिलापसंसर्गरहितत्वात् । सन्निहितविषयं च, तेन कालत्रयविप्रकृष्टार्थागोचरत्वात् । तन्न साकल्येन व्याप्तिग्रहणसमर्थम् । न चानुमानम् अनवस्थानुषङ्गात् । व्याप्तिग्राहिणोऽनुमानस्यापि व्याप्तिग्रहणपुरस्सरत्वात् व्याप्तेरप्यनुमानान्तरापेक्षत्वात् । क्वचिदव्यवस्थानाभावात् । एवमप्रसिद्धव्याप्तिकं च कथमनुमानमेकान्तवादिनामनित्यत्वाद्येकान्तधर्मस्य साधकं येन प्रमाणसिद्धः सर्वथैकान्तोऽनेकान्तशासनस्य बाधकः स्यात् ? स्याद्वादिनां तु परोक्षान्तर्भाविना सत्तर्केण सम्यगूहो व्यवतिष्ठेत । तस्य विचारकत्वात्, प्रत्यक्षानुपलम्भसहकारिणो मतिज्ञानविशेषपरोक्षत्वज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषादुपजायमानस्य यावान्कश्चिद्धूमः स सर्वोऽप्यग्निजन्माऽनग्निजन्मा वा न भवतीति प्रत्ययोऽनासादितपरामर्शारम्भकत्वात्कालत्रयवर्तिसाध्यसाधनव्यक्तिविषयतया व्याप्तिं प्रति समर्थत्वात्, प्रत्यक्षवद्व्याप्तिग्रहणपूर्वकत्वाभावादनुमानोऽन्न्यान्तरानपेक्षत्वादनवस्थानानुषङ्गात्, स्वार्थकत्वेन समारोपव्यवच्छेदकत्वेन च प्रमाणत्वात् । तदप्रमाणत्वे न लैङ्गिकं प्रमाणमिति क्षेपः, समारोपव्यवच्छेदाविशेषात् सर्वथा तत्त्वस्याधिगमे समारोपविरोधात् । न हि निर्विकल्पकोऽधिगमोऽस्ति यतस्तत्र समारोपोऽपि स्यात् । किं तर्हि ? अधिगमोऽपि व्यवसायात्मैव, तदनुत्पत्तौ सतोऽपि दर्शनस्य साधनान्तरापेक्षया सन्निधानाऽभेदात् सुषुप्तचैतन्यवत् । सन्निधाने हीन्द्रियार्थसन्निकर्षः । तत्स्वयमप्रमाणमास्थाय तथागतः, साधनान्तरापेक्षित्वात् तस्यार्थपरिच्छित्तौ । तत एव दर्शनस्याप्रमाणत्वं, सुषुप्तचैतन्यवत् स्वयं संशयविपर्यासानध्यवसायाव्यवच्छेदकत्वात् । तद्व्यवच्छेदिनो निश्चयस्य जननात्प्रमाणं दर्शनमिति चेत्, तत एव सन्निकर्षः प्रमाणमस्तु । तस्यासाधकतमत्वान्न प्रमाणत्वमिति चेत्, कुतस्तस्यासाधकतमत्वम् ? अचेतनत्वाद्घटादिवदिति चेत्, दर्शनस्याप्यसाधकतमत्वं चेतनत्वात्सुषुप्तचैतन्यवत्किं न स्यात् ? यस्य भावेऽर्थः परिच्छिन्नो व्यवह्रियतेऽभावे चाऽपरिच्छिन्नस्तदस्येव साधकतममिति चेत्, सन्निकर्षः साधकतमोऽस्तु, भावाभावयोस्तद्वत्ता साधकतमत्वमिति वचनात् ।

वाऽन्यपेक्षिणाऽनेकसमितेः रूपोपलम्भात् । न चैवं सविकल्पकपाठकयोरन्यभावे विवक्षामात्रात्तस्करचिन्तनप्रवृत्तिः प्रसज्यते, सविकल्पक चैतन्ये यथाविवक्षं वाग्वृत्तेरभावात् । न हि प्रज्ञयोर्यस्य शास्त्रपरिज्ञानाभावे वक्ष्यमाणविवक्षायां सत्यामपि वचनप्रवृत्तिर्दृश्यते, करणपाटवस्य चाभावे स्पष्टशब्दोच्चारणं वाक्प्रवृत्तेरपि तत्प्रसङ्गात् । ततश्चैतन्यं करणपाटवं च वाचो हेतुरेव नियमतो, न विवक्षा, विवक्षामन्तरेणापि सुषुप्त्यादौ तद्दर्शनात् । न च दोषजातिरस्ति हेतुर्यतस्तां वाणी नातिवर्तेत तत्प्रकर्षापकर्षानुविधानाभावाद्बुद्ध्यादिवत् । न हि यथा बुद्धेः शक्तेश्च प्रकर्षे वाण्याः प्रकर्षोऽपकर्षे चाऽपकर्षः प्रतीयते, तथा दोषजातेरपि, तत्प्रकर्षे वाचोऽपकर्षात् तदपकर्षे एव तत्प्रकर्षात् यतो वक्तुर्दोषजातिरनुमीयेत । सत्यपि च रागादिदोषे कस्यचिद्बुद्धेर्यथार्थत्वप्रसाधितत्वादिगुणस्य सद्भावात्, सत्यवाक्प्रवृत्तेरुपलम्भात्, कस्यचित्तु वीतरागकल्पस्यापि बुद्धेरयथार्थत्वप्रसाधितत्वादिदोषस्य भावे वितथवचनस्य दर्शनाद्विज्ञानगुणदोषाभ्यामेव वाक्प्रवृत्तेर्गुणदोषवत्ता व्यवतिष्ठते, न पुनर्विवक्षातो दोषजातेर्वा । तदुक्तं " विज्ञानगुणदोषाभ्यां वाग्वृत्तेर्गुणदोषता । वाञ्छन्तो वा न वक्तारः शास्त्राणां मन्दबुद्धयः ॥ १ ॥ " इति । ततः साधूक्तमिदं 'तदेवं मतं शासनमुपपद्यते' इति । तदसिद्धेन न बाध्यते । प्रमाणतः सिद्धं प्रसिद्धम् । परेण कस्यचिद्बाधनं युक्तम् । विशेषणमेतत्परमतापेक्षम्, अप्रसिद्धेनाप्यनित्यत्वादेरन्यधर्मेण बाधाऽकल्पनात् । न ह्यनेकान्तशासनस्य प्रत्यक्षतः सिद्धोऽस्त्यनित्यत्वधर्मो बाधकः, सर्वथा नित्यत्वाविपर्ययात् । अनुमानात्सिद्धो बाधक इति चेत् नैवं प्रमाणात्प्रतिबन्धसिद्धेरनभ्युपगमात् । न खलु परेषां प्रत्यक्षमतीन्द्रियमयोः व्याप्यव्यापकयोः साकल्येन व्याप्तिं प्रति समर्थम्, अविचारकत्वात्सन्निहितविषयत्वाच्च । असमाधिमत्त्वं हि साध्यसाधनयोर्व्याप्तिमादि परैरभ्युपगन्तव्यं न योगिप्रत्यक्षम् अनुमानवैयर्थ्यप्रसङ्गात् योगिप्रत्यक्षेण देशतः कार्त्स्न्यतो वा निःशेषसाध्यसाधनव्यक्तिसाक्षात्करणे समारोपस्याप्यभावात् तद्व्यवच्छेदार्थमप्यनुमानोपयोगायोगात् । तच्च निर्विकल्पकमिव

मविकल्पकमपि न विचारकं पूर्वापरपरामर्शशून्यत्वादभिलापसंसर्गरहितत्वात् । सन्निहितविषयं च देशकालस्वभावविप्रकृष्टार्थागोचरत्वात् । तन्न साकल्येन व्याप्तिग्रहणसमर्थम् । न चानुमानम् अनवस्थानुषङ्गात् । व्याप्तिग्राहिणोऽनुमानस्यापि व्याप्तिग्रहणपुरस्सरत्वात् व्याप्तेरप्यनुमानान्तरापेक्षत्वात् । क्वचिदवस्थानाभावात् । एवमप्रसिद्धव्याप्तिकं च कथमनुमानमेकान्तवादिनामनित्यत्वाद्येकान्तधर्मस्य साधकं येन प्रमाणसिद्धः सर्वथैकान्तोऽनेकान्तशासनस्य बाधकः स्यात् ? स्याद्वादिनां तु परोक्षान्तर्भाविना तर्केण सम्बन्धो व्यवतिष्ठते । तस्य विचारकत्वात् प्रत्यक्षानुपलम्भसहकारिणो मतिज्ञानविशेषपरोक्षतर्कज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषादुपजायमानस्य यावान्कश्चिद्धूमः स सर्वोऽप्यग्निजन्माऽनग्निजन्मा वा न भवतीति सम्बन्धयोजनासहितपरामर्शात्मकत्वात्त्रिकालगोचरसाध्यसाधनव्यक्तिविषयत्वाच्च व्याप्तिं प्रति समर्थत्वात्, प्रत्यक्षवद्व्याप्तिग्रहणपूर्वकत्वाभावादनुमानोहान्तरानपेक्षत्वादनवस्थानानुषङ्गात्, संवादकत्वेन समारोपव्यवच्छेदकत्वेन च प्रमाणत्वात् । तदप्रमाणत्वे न लैङ्गिकं प्रमाणमिति शेषः, समारोपव्यवच्छेदाविशेषात् तर्कवत् । स्वरूपस्याधिगमे समारोपविरोधात् । न हि निर्विकल्पकोऽधिगमोऽस्ति यतस्तत्र समारोपोऽपि स्यात् । किं तर्हि ? अधिगमोऽपि व्यवसायात्मैव, तदनुत्पत्तौ सतोऽपि दर्शनस्य साधनान्तरापेक्षया सन्निधानाऽभेदात् सुषुप्तचैतन्यवत् । सन्निधानं हीन्द्रियार्थसन्निकर्षः । तत्स्वयमप्रमाणमाख्यत् यथागतः, साधनान्तरापेक्षित्वात् तस्यार्थपरिच्छित्तौ । तत एव दर्शनस्याप्रमाणत्वं, सुषुप्तचैतन्यवत् स्वयं संशयविपर्यासानध्यवसायाव्यवच्छेदकत्वात् । तद्व्यवच्छेदिनो निश्चयस्य जननात्प्रमाणं दर्शनमिति चेत्, तत एव सन्निकर्षः प्रमाणमस्तु । तस्यासाधकतमत्वान्न प्रमाणत्वमिति चेत्, कुतस्तस्यासाधकतमत्वम् ? अचेतनत्वाद्घटादिवदिति चेत् दर्शनस्याप्यसाधकतमत्वं चेतनत्वात् सुषुप्तचैतन्यवत्किं न स्यात् ? यस्य भावेऽर्थः परिच्छिन्नो व्यवह्रियतेऽभावे चाऽपरिच्छिन्नस्तद्दर्शनं साधकतममिति चेत्, सन्निकर्षः साधकतमोऽस्तु, भावाभावयोस्तद्वत्ता साधकतममिति वचनात् ।

चाऽभ्यासेऽभिप्रायसम्भवेः स्वोपलम्भात् । न चैवं चैतन्यकरणपाटवयोरप्यभावे विवक्षामात्राद्वचनप्रवृत्तिः प्रसज्यते, चैतन्यकरण-वैकल्ये वचनविवक्षायां वाग्वृत्तेरभावात् । न हि प्रज्ञयोर्वचनस्य साधकतमत्वाभावे तथाभ्यासविवक्षायां सत्यामपि वाग्वचनप्रवृत्तिर्दृष्टैव, करणपाटवस्य चाभावे स्वप्नप्रबोधयोर्वाग्व्यापारस्यापि तत्प्रसङ्गात् । तथैतन्यं करणपाटवं च वाचो हेतुरेव नियमतो, न विवक्षा, विवक्षामन्तरेणापि सुषुप्त्यादौ तद्दर्शनात् । न च दोषजातिस्तद्धेतुर्यतस्तां वाणी नातिवर्तेत, तत्प्रकर्षापकर्षानुविधानाभावाद्बुद्ध्यादिवत् । न हि यथा बुद्धेः शक्तेश्च प्रकर्षे वाण्याः प्रकर्षोऽपकर्षे चाऽपकर्षः प्रतीयते तथा दोषजातेरपि, तत्प्रकर्षे वाचोऽपकर्षात् तदपकर्षे एव तत्प्रकर्षात् । ततो वक्तुर्दोषजातिरनुमीयेत । सत्यपि च रागादिदोषे कस्यचिद्बुद्ध्यतिशयात्सत्यव्यवसायादिगुणस्य सद्भावात्, सत्यवाक्प्रवृत्तेरुपलम्भात्, कस्यचित्तु वीतरागद्वेषस्यापि बुद्धेरपचारादध्यवसायादिस्वरूपदोषस्य भावे वितथवचनस्य दर्शनाद्विज्ञानगुणदोषाभ्यामेव वाग्वृत्तेर्गुणदोषवत्ता व्यवतिष्ठते, न पुनर्विवक्षातो दोषजातेर्वा । तदुक्तं " विज्ञानगुणदोषाभ्यां वाग्वृत्तेर्गुणदोषता । वाञ्छन्तो वा न वक्तारः शास्त्राणां मन्दबुद्धयः ॥ १ ॥ " इति । ततः साधूक्तमिदं 'यदिष्टं मतं शासनमुपपद्यते इति । तत्प्रसिद्धेन न बाध्यते । प्रमाणतः सिद्धं प्रसिद्धम् । तेन कस्यचिद्बाधनं युक्तम् । विशेषणमेतत्परमतापेक्षम्, परमसिद्धेनात्यन्तनित्यत्वाद्येकान्तधर्मेण बाधाऽकल्पनात् । नन्वनेकान्तशासनस्य प्रत्यक्षतः सिद्धोऽस्त्यनित्यत्वधर्मो बाधकः, सर्वथा नित्यत्वादिधर्मवत् । अनुमानात्सिद्धो बाधक इति चेत्, मतं प्रमाणात्प्रतिबन्धसिद्धेरभ्युपगमात् । न खलु परेषां प्रत्यक्षमविप्लवतो व्यक्तसम्बन्धयोः साकल्येन व्याप्तिं प्रति समर्थम्, अविचारकत्वात्सन्निहितविषयत्वाच्च । परमतादिमतस्य हि साध्यसाधनयोर्व्याप्तिमादौ परैरभ्युपगम्यते, न योगिप्रत्यक्षम्, अनुमानवैयर्थ्यप्रसङ्गात् योगिप्रत्यक्षेण केवलः

इह दृष्टान्तावचन स्विति (१००-१-१३) हेतुर्यद्यपि हेतुधर्मविशेषधर्मविशिष्टैव हेतुहेतुमद्भावलाभात् तथापि दृष्टान्तलाभे शाब्दसामग्री न व्याप्रियत इत्याक्षेपात् तत्क्रमः धर्म्याप्याहारात्र शाब्दबोधे प्रवेश इति संक्षेपाच विरुध्यत इत्यनेनोच्यत इति विभावनीयं सुधीभिः । 'अन्यथानुपपन्नत्वेत्यादि' (१००-१-१३) पक्षधर्मत्वादिपञ्चरूपोपपन्न एव हेतुरिति नैयायिकाः त्रिरूपोपपन्न इति सौगताः । अन्यथानुपपत्त्येकलक्षणो हेतुरिति जैना इति विभागात् स्वामीष्टचरमपक्षप्राधान्यं स्फोटयितुमित्यर्थः, चिद्विवर्तत्वात् (१००-२-१०) विवक्ष्याप्तकार्यत्वादिच्छादीनामपि चिदनुस्यूतत्वेन चैतन्योपादानकारणकत्वस्याभीष्टत्वादित्यर्थः । पूर्वचिद्व्याप्तधर्मोपमर्देनोत्तरचिद्व्याप्तधर्मोत्पत्तेः, परस्परं तेषामुपादानोपादेयभावस्य चार्वाकेणाभ्युपगमात्, न चैवंभूतोपादेयचैतन्यवादे भूतानामपि चिद्विवर्तत्वादाद्यचैतन्यस्य भूतात्मकचैतन्योपादेयत्वेनार्थान्तरत्वम्, अचाक्षिष्टभूते घटादौ चैतन्यदर्शनेन चिद्विवर्तत्वेन भूतव्याप्तत्वेनैव प्रकृतोपादानसम्भवात्, तस्य च तस्य विषयालोकमनस्कारादीनां परस्परसहभावनैयत्येऽपि नियतोपादानत्वाभ्युपगमश्च दुष्कराभ्युपगममिति दिक् । जातिरेव (१०११२) असदुत्तरमेव, अर्थान्तरत्वेन निग्रहस्थानमेव वा प्रकृतानुमानप्रतिकूलात्मभिधानेन परस्यैव पराजयादिति भावः । तस्यान्तरभावविरोध इति (१०११४) अत्र तत्त्वान्तरत्वं भिन्नपदार्थविभाजकोपाध्यवच्छिन्नत्वम्, पृथिव्यादिविवर्तमिति (१०११५) पृथिव्यादिः पृथिवीत्वाद्यवच्छिन्नो विवर्तः पर्यायो यस्य तथा, 'अनुपादानस्येति' (१०१-१-८) तथा च जन्यपृथिवीत्वाद्यवच्छिन्ने पृथिवीत्वादिना समवायिकारणत्वं नैयायिकाद्यभ्युपगतमकामेनापि चार्वाकेणावश्यमाश्रयणीयमित्यर्थः । स्याद्वादिना तु तादात्म्येन पृथिवीत्वाद्यवच्छिन्ने स्वध्वंसत्वसम्बन्धेन पृथिवीत्वादीना हेतुत्वं वाच्यम्, विभागजातोत्पत्तिस्थलेऽपि द्व्यणुका

..

इह दृष्टान्ताबचनं स्थिति (१००-१-१२) हेतुर्यद्यपि हेतुगर्भविशेषणमहिम्नैव हेतुहेतुमद्भावलाभात् तथापि दृष्टान्तलाभे शाब्दसामग्री न व्याप्रियत इत्याक्षेपात् पक्षाभा शब्दाप्यत्वाराय शाब्दबोधे प्रवेश इति संक्षेपाय विरुध्यत इत्यनेनोच्यत इति विभावनीयं सुधीभिः। 'अन्यथानुपपन्नत्वेत्यादि' (१००-१-१३) पक्षधर्मत्वादिपञ्चरूपोपपन्न एव हेतुरिति नैयायिकाः त्रिरूपोपपन्न इति सौगताः। अन्यथानुपपत्त्येकलक्षणो हेतुरिति जैना इति विभागात् स्वाभीष्टपरमपक्षप्राधान्यं स्फोटयितुमिच्छुः, चिद्विवर्तत्वात् (१००-२-१ ) चित्तम्याप्तकार्यत्वादिच्छादीनामपि चिदनुस्यूतत्वेन चैतन्योपादानकारणकत्वस्या भीष्टत्वादित्यर्थः। पूर्वचित्तम्याससयोपमर्देनोपरचित्तम्यासधर्मोत्पत्तेः, परस्परं तेषामुपादानोपादेयभावस्य चार्वाकेणाभ्युपगमात्, न चैवंभूतोपादेयचैतन्यवादे भूतानामपि चिद्विवर्तत्वादाद्यचैतन्यस्य भूतात्मकचैतन्योपादेयत्वेनार्थान्तरत्वम्, अवच्छिन्नमूते घटादौ चैतन्यावच्छेदेन चिद्विवर्तत्वेन भूतव्याप्तत्वेनैव प्रकृतोपादानसम्भवात्, तस्य च तस्य विषयालोकमनस्कारादीनां परस्परसहभावनैयत्येऽपि नियतोपादानत्वाभ्युपगमवत्त्व तुल्याभ्युपगममिति दिक्। जातिरेव (१०१ १ २) असदुत्तरमेव, अर्थान्तरत्वेन निग्रहस्थानमेव वा प्रकृतानुमानप्रतिकूलानभिधानेन परस्यैव पराजयादिति भावः। तत्त्वान्तरभावविरोध इति (१०१ १ ४) अत्र तत्त्वान्तरत्वं भिन्नपदार्थविभाजकोपाध्यवच्छिन्नत्वम्, पृथिव्यादिविवर्तमिति (१०१ १ ५) पृथिव्यादिः पृथिवीत्वाद्यवच्छिन्नो विवर्तः पर्यायो यस्य तत्तथा, 'अनुपादानस्येति' (१०१-१-८) तथा च जन्यपृथिवीत्वाद्यवच्छिन्ने पृथिवीत्वादिना समवायिकारणत्वं नैयायिकाद्यभ्युपगतमकामेनापि चार्वाकेणावश्यमाश्रयणीयमित्यर्थः। स्याद्वादिना तु तादात्म्येन पृथिवीत्वाद्यवच्छिन्ने स्वध्वंसत्वसम्बन्धेन पृथिवीत्वादीना हेतुत्वं वाच्यम्, विभागजातोत्पत्तिस्थलेऽपि द्व्यणुका

द्विर्गमरूपाया एव परमाणुरूपेः स्वीकारादिति युक्तं पश्यामः । 'शब्दादिरिति' (१ १-१-९) अनेनानुमानेन शब्दस्य भाषावर्गणोपादानत्वं विद्युदादेर्माम्याद्युपादानत्वं साधनीयमिति भावः । तयोर्भिन्नलक्षणत्वादिति (१०१-१-१२) भिन्नं लक्षणं तयोर्बहिरन्तर्मुखतया च प्रतीयमानत्वमेवेति ग्रहणम् । तत एव भिन्नलक्षणत्वादेव तदाह—अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति असमवायिमत्वस्त्वादिति असदादयनेकप्रतिपत्तृप्रत्यक्षत्वादित्यर्थः । तेन ज्ञाने न व्यभिचारः, घटादिवदिति न चैवं पक्षत्राचेव पक्षतावच्छेदकसाध्यसामानाधिकरण्यसिद्धेरनुमानवैफल्यमिति शङ्कनीयम् । पृथिवीतरेभ्यो भिद्यते इत्यत्रेव प्रकृते पक्षतावच्छेदकावच्छेदेन साध्यासिद्धेरस्त्यत्र तदवैफल्यमित्यभिप्रायात्, न चोपचरिते नेति (१०१-२-५) अन्यथोपचरितधूमेन वाष्पादिना महानसादेरपि व्यभिचारविच्छिन्नोदयोपः सकर्मककर्मान्तुवः स्यादिति भावः । स्वतो बहिर्मुखेति तथा च प्रकृते बहिरर्थमर्दं स्वाभिमपरमेवेति भावः । स्वाभिन्नत्वमपि न स्वप्रतियोगिकभेदवत्त्वमात्रं परिष्कारिवृ यावद्विकल्पयोः, आद्ये स्वस्मिन्भेद स्वमेवभ्रमनाद्वात्, अन्त्ये च कुम्भापि तदप्रसिद्धेः सत्त्वादिना भेदस्य कुम्भादावप्यभावात्, किन्तु स्वनिष्ठज्ञानत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, तच सुखादिसंवेदनापेक्षया सुखादावपि सिद्धम्, इति न तत्र बहिरर्थपरिच्छेदकत्वासिद्धिरित्याशयेनाह 'कुम्भादिवेदनस्यापीति (१०१-२-७) सुखादीति' सुखादेः कारणं सातवेदनीयकर्मोदयादिः, तत्संवेदनस्य कारणं च ज्ञानावरणकर्मक्षयोपशमादिः, इत्येवं कारणभेदादप्यनयोर्भेदो न केवलमात्रावदनपरिच्छेदाकाररूपलक्षणभेदादिति भावः । 'तस्येवेति' (१०१ २ १०) विषयनिर्मुक्तज्ञानानुभवाभावाद्युपरक्तस्यैव तस्य स्वांशे स्वसंवेदकत्वं विषयांशे च परसंवेदकत्वमविरुद्धमिति भावः । अविरुद्ध पश्याम (१०२-१-५) इति ननु कथमेतदविरुद्धं

प्रत्यक्षविषयताया इन्द्रियसन्निकर्षप्रयोज्यत्वेन ज्ञाने सन्निकृष्टमात्रार्थविषयत्वोपपत्त्यापि स्वविषयताद्युपपत्तेः स्वविषयतायाः प्रत्यक्षत्वनियताया अभ्युपगमाच्चास्माभिस्तस्याः प्रयोजकाभावादिति चेत्, न। प्रत्यक्षविषयतामात्रस्येन्द्रियसन्निकर्षप्रयोज्यत्वे मानाभावादसन्निकृष्टे चक्षुर्ले प्रत्यक्षविषयतायास्तत्र सत्त्वोपपादितत्वाच्छुक्तिसन्निकर्षेऽपि रजतविषयकप्रत्यक्षस्य सार्वजनीनत्वाच्चे न्द्रियसन्निकर्षघटोपादेरपि प्रत्यक्षविषयताप्रयोजकत्वाभ्युपगमे च तादात्म्येन ज्ञानस्यापि तत्त्वं किमिति न रोचये:। ज्ञानस्य ज्ञानान्तरवेद्यत्वेऽनवस्थानात् ज्ञानमानसत्वे चाक्षुषादिसामग्र्याः प्रतिबन्धकत्वाकल्पनलाघवाच्च स्वसंवेद्यताया एव युक्तत्वादिति दिक्। 'विजातीयत्वाभिमतयोरिति' (१०२-१-९) सत्त्वादिना सजातीययोरपि जलानलयोर्जलत्वानलत्वाभ्यां विजातीययोर्यथा नोपादानोपादेयभावश्चार्वाकैरभ्युपगम्यते, तथाऽस्माभिर्भूतचैतन्ययोरिति साजात्यविशेषस्योपादानोपादेयभावप्रयोजकत्वं नामासाकमिति भावः। 'पार्थिवत्वादिनेति' (१०२ १ १०) नन्वेवं पटस्य पटत्वावच्छिन्ने कपालस्य तन्तुत्वादिना हेतुत्वं न स्यादिति चेत्, न। तथाहेतुत्वेऽपि तयोरुपादानोपादेयभावस्तयोः पदार्थविभाजकोपाधिना साजात्यमिति नियमस्याभङ्गात्। साजात्यविशेषेण नियतारम्भस्य सुव्यवस्थितत्वात्, केचित्तु नास्त्येव पटत्वावच्छिन्ने तन्तुत्वादिना हेतुत्वमत एव स्थापितत्रितन्तुकपटादेस्तन्त्वन्तरसंयोगे पटोत्पत्तिर्घटते, एकैकतन्तुसंयोगे द्वितन्तुकादेर्नाशे त्रितन्तुकोत्पत्तिः, पुनरेकैकतन्तुवियोगे त्रितन्तुकादिनाशे द्वितन्तुकोत्पत्तिरिति कल्पनाया गौरवप्रासादित्याहुः—'असदेतत्, अनन्यथासिद्धान्वयव्यतिरेकानुविधानात् तथाहेतुत्वसिद्धेः त्रितन्तुकपटादेरपि तन्त्वावेशोत्पत्तिस्वीकारात् युगपत्तन्तुत्रयादिसंयोगे तन्त्वोरेव चतुस्पर्शदर्शनात्, त्रितन्तुकादिक्रमेणोत्पन्नचतुरादितन्तुकपटस्य द्वितन्तुकासमवायिकारणसंयोगनाशात् द्वितन्तुकादिनाशक्रमेण नाशोऽन्तरा पुन

सादितन्तुकादिमति त्रितन्तुकाद्युत्पत्तिर्निराबाधैव स्वोत्पत्तिव्याप्यद्रव्यत्वावच्छिन्नाभावस्य हेतुत्वोपगमे तु द्वितन्तुकादिमति च त्वन्तरादियोगादेकतन्तुकोत्पत्तेर्दुर्वारत्वापत्तेरित्याहुः॥ क्षमाश्रमणपूज्यपादानुसारिणस्तु चरमतन्तुसंयोगकाल एव क्रिय मार्ण कृतमिति नयेन पटोत्पत्तिं स्वीकुर्वते, तत्पाककालीनकार्यकोटिषु पटधीस्तु पटगताभिलापोत्कर्षदोषापत्युक्तं घटमाश्रित्य महाभाष्ये–" पइसमयकज्जकोडीणिरवेक्खो घडगयाहिलासो सि। पइसमयकज्जकोडिं पूलमइ घडमि लाए सि ॥१॥" त्ति, एवं चैकः पट इत्यादेर्बोधस्य लोके शास्त्रे च व्यवहारस्य चोपपत्तिः, नहि नाना पटाः प्रतीयन्ते व्यवह्रियन्ते न च चाङ्गुलीमूलसंयोगावच्छेदेन प्राप्त्यायनन्तर्संयोगानुपलब्ध्यादिवन्, सादृश्यादिना नानापटानुपलब्ध्युपपत्तिः, उभयत्रै कपुरुषपमापात्, महापटकाले द्वितन्तुकादेः स्वीकारे तन्त्वाकाशसंयोगादितोऽनन्तद्वितन्तुकाकाशसंयोगादेर्द्वितन्तुकत्रितन्तुकादेः परस्परकर्मजसंयोगद्वित्वत्रित्वादेर्वाप्यायनन्तर्संयोगादेश्च कल्पनामपेक्ष्य तेषां नाशस्य क्वचिदन्येषां कल्पनस्यैव च लाघवे नौचित्यात्, तन्यारम्भे द्रव्याभावस्य तु निरवच्छिन्नविशेषणतया हेतुत्वाद्देशावच्छेदेन पटाद्यभावसत्त्वेऽपि न दोषः। चक्षुरगा द्विव्यवहारस्त्वेकस्मिन् हस्तयुगादिव्यवहारवदुपपादनीयः। एकतन्तुकाद्युत्पत्त्यपनापत्तिस्तु निर्द्रव्यद्रव्यस्य विजातीयसंयोगेन तन्यद्रव्यहेतुत्वादित्याहुः॥ 'सर्वेऽप्येते नयवादा वस्तुत 'एगसमयंमि एगदवियस्स च हुमा वि हुंति उप्पाया' इत्यादिपर्यालोचनया संयोगविभागयानन्त्वोत्पादतावभाञ्जकिर्म्मीरितमौख्यैकस्वभावस्त्वभ्युपगमादापेक्षिकानापेक्षिकनानापटपरिणामारम्भकतन्तूत्पा दाभ्युपगमादस्माकं न काप्यनुपपत्तिः, एकस्मिन् पटे हस्तादिभेदेन नानापटव्यवहारस्यापि स्कन्धदेशप्रदेशकरूपद्रव्यविभागेनै वोपपत्तेरुपादानता तु तत्र व्यवहारतस्तन्तुत्वादिना निश्चयतस्तुशक्तिविशेषेणेति तन्तोरिव द्वितन्त्वादेरपि न पटाद्युत्पत्तिः इत्यं च

पार्थिवत्वादिनाऽप्युपादानोपादेयभावो नियतारम्भनपेऽन्यथा तु शक्तिविशेषेण जलादिपरमाणोरपि पार्थिवारम्भस्य बहुलमुप
लम्भात्, पुद्गलपर्यायत्वावच्छिन्ने पुद्गलद्रव्यत्वेनोपादानोपादेयभावस्तु कल्पनीयोऽन्यथाऽसमानजातीयद्रव्यधर्मिमनुष्यादौ
पुद्गलान्तरविशेषानुपलम्भापत्तेः, इत्थमपि च चिदचितोर्मिथोपादानोपादेयत्वमभ्याहत्यमभ्यासजन्यदृविधर्मत्वादिति दिक् ।
' पूर्वोपकारेति ' ( १०२-१-११ ) द्रव्यार्थिकनयेनात्र देवादिपर्यायपर्यसविधिशातमत्वेन तद्व्यवहितोत्तरपर्यायत्वेनोपादा-
नोपादेयभावः, पर्यायार्थिकनयेन तु स्वध्वंसत्वसमयवन देवादिपर्यायस्य मनुष्यादिपर्यायत्वावच्छिन्ने तादात्म्येनेति विशेषो
द्रष्टव्यः । तस्य तेनाव्याप्तिरिति भिन्नलक्षणत्वस्य तथान्तरभावेन सह व्याप्यव्यापकभावाभावइत्यर्थः । ' भवजननश
क्तिसद्भावादिति ' ( १०२-१-१४ ) तथा च सामान्यविशेषेण भिन्नलक्षणत्वाविरोधादित्यर्थः । ' इष्टप्रतिष्ठानादिति '
( १०२-२-३ ) चैतन्यपक्षस्यन्वयिन आत्मद्रव्यस्यैव सिद्धेर्धीतरागस्य भावर्धनन्यायपातस्य भूतनामकरणेऽपि पस्त्वव्यापा
तादित्यर्थः । तद्विपर्ययत्वमसद्भावादिति ( १०२-२-३ ) सामान्यविशेषस्य विनिगमकस्यानभ्युपगमादित्यर्थः । कादा
चित्कत्वादितो न विरचवत्त्वं भविष्यतीत्यत आह–' अनाद्यनन्तत्वाविशेषादिति ' भूतचैतन्ययोरित्यर्थः । तथा चेच्छा
मात्रेणोपादानोपादेयभावाभ्युपगमेऽतिप्रसङ्गो दुर्वार इति भावः । ' चैतन्यविशेष इति ' (१०२-१-८) अनावृतसर्वविष
यकचैतन्य इत्यर्थः । न च कूटस्थनित्यात्मश्रुतिश्चैतन्यविशेषावस्थानाभ्युपगमविरोधिनीनिर्धर्मकत्वस्य कूटस्थपदार्थत्वे चित्य
धर्मस्याप्युच्छेदापत्तेस्तस्याभयाभिमतद्रव्यात्म्यात्मकत्वेऽनन्तविशेषाणामपि तथात्वसम्भवात् सामान्यप्रतिज्ञाव्याघाताभि-
व्यक्तस्यापि च कार्यविमर्शविशेषैर्वोपपत्तेरिति, अनुमयेन (१०२-१-९) बुद्धिनिष्ठप्रतिबिम्बाद्विम्बचैतन्यलक्षणेनेत्यर्थः ।

बुद्ध्यध्यवसित (१०३-१-१०) बुद्धिप्रतिबिम्बितम्, चेतयते (१०३-१-१०) निश्चिनोति, तदुपायानुष्ठानवैयर्थ्यमेव स्यादिति (१०३-१-११) सर्वमुक्त्योपायानां ध्यानमौनाचरणादीनां निरर्थकतैव स्यादित्यर्थः। 'स कोऽन्य इति' (१०३-२-२) एतेन दर्पणे मुखप्रतिबिम्बस्थानीयो बुद्धावहमिति पुरुषोपरागो मुखरक्ततासंसर्गस्थानीयो घट इत्यादिर्विषयोपरागो बिम्बचलनावेशस्थानीयः करोमीति व्यापारावेश इत्यंशत्रयकल्पनमपास्तम्। सम्बन्धसामान्यस्यातिप्रसञ्जकत्वात् सम्बन्धविशेषस्य च तादात्म्यातिरिक्तस्य युक्तिरिक्तत्वादमूर्तस्यात्मनः प्रतिबिम्बादिकल्पनाया बालक्रीडाप्रायत्वादिति द्रष्टव्यम्। न निषा पेन्स इति (१०४-१-१४) न च ज्ञानत्वावच्छिन्नं एवान्तःकरणादिहेतुता मुक्तौ तदजन्यज्ञानाद्यनुपपत्तिरिति वक्तुं युक्तम्, परैरपीश्वरज्ञानादिव्याप्तये जन्यत्वस्य कार्यतावच्छेदककोटौ दानात् तस्य च ध्वंसप्रतियोगित्वरूपत्वात्, ध्वंसाप्रतियोगिज्ञानादीनां मुक्तावनुपपत्त्यभावात्, न च जन्यत्वेन ज्ञानादीनां मुक्तावपि ध्वंस आवश्यक इति वाच्यम्। जन्यत्वेन ध्वंसहेतुत्वे मानाभावात् प्रतियोगिनो विशिष्य हेतुत्वेऽपि मुक्तज्ञानादीनां ध्वंसाहेतुत्वकल्पन एव लाघवात्, नचोपयोगस्य संसारदशायामन्तर्मुहूर्त्तावस्थितिकत्वदर्शना मुक्तावपि कालाभावप्रसङ्ग इति वाच्यम्। केवलज्ञानादीनां कालानाश्यत्वस्य तदुपयोग क्षयिकत्वे च प्रवाहतस्तदानन्त्यस्य सिद्धान्तसिद्धत्वादित्याद्यधिकमस्मत्कृतन्यायालोकादौ, अन्यत्र केवलेत्यादि (१०४-२-२) विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वादौपशमिकादिभावमध्यपतितस्य चारित्रादेः क्षायिकभावस्यापि सिद्धिसमये नाश इत्यस्मात्कथनाल्लभ्यते यो यः क्षायिको भावः स स नाशाप्रतियोगीतिनियमस्यानेनैवानिरासात्, केवलसम्यक्त्वाद्यन्यमात्रनाशेऽयोगिगुणस्थानचरमसमयस्य हेतुत्वात् क्षायिको भावः साद्यनन्त एवेति तु मतान्तरम्, तदाश्रयणे तु सिद्धा-

नाप्यपि चारित्रं भवस्थेव परं तु भणे सिद्धो नो चारित्री नो अचारित्री चारित्रलब्धिमवधिमनः पर्यायपर्यवाणि चत्वारि ज्ञानानि भवनयेत्यादिसिद्धान्तवचनाद्युपष्टम्भ इत्येतन्महता प्रबन्धेनोपपादितमस्माभिरध्यात्ममतपरीक्षायामिति तत एवावगन्तव्यम् । तथा वचनं (१०४–२–६) कथञ्चिद्विशेषगुणनिरूपणनिर्विवचनम्, कथमेवमिति, अनन्तसुखस्य कष्ठतोऽनभिधानादयं प्रश्नः । 'सिद्धस्वभावसमाविति' तथा च सिद्धस्वेनाक्षेपाद्धाम इति भावः । 'सैव चेति' (१०४–२–६) आत्यन्तिकी दुःखनिवृत्तिरेव चेत्यर्थः अभावस्य भावान्तरस्वरूपत्वादिति भावः । यदप्येवं दुःखनिवृत्तिसुखपरिणाममात्रेऽतिप्रसङ्गः तथाप्युपस्थितदुःखकारणनिवृत्त्यादेः सुखहेतुत्वस्य लोकशास्त्रसिद्धत्वात्तदत्यन्तनिवृत्त्यादिजन्यमनन्तसुखं मोक्षे सिद्ध्यतीत्यत्र तात्पर्यम् । तदाहुः श्रीहरिभद्राचार्याः ॥ " कर्मं सत्तमत्तु तह सव्वारि सासयसयमिच्छाणं । सयविममजोगपयीर्हि होइ तयो अणंतगु(मि)-च ॥१॥ त्ति, वाचकचक्रवर्तिनोऽप्याहुः ॥ " देहमनोवृत्तिभ्यां भवतः शारीरमानसे दुःखे । तदभावात्तदभावे, सिद्धं सिद्धस्य सिद्धिसुखम् ॥१॥ इति । अथान्यत्र चक्षुरपायविज्ञानादेव सुखोत्पादर्शनात् स्वरूपसत्या अत्यन्तदुःखनिवृत्तेरनन्तसुखहेतुत्वमयुक्त

● सिद्धसुखविलक्षणताम् ॥ रागाइया य पू कम्मुवमा चाविमो हर्द नेया । कईमो परमत्ता इच्छाणिच्छेमम्मो य तहा ॥२॥ अणुहवसिद्धं एयं नाकम्मासुहं च रोगिणो नवरं । गम्मइ इयरेण तहा सम्ममिणं चितियव्वं तु ॥३॥ पठे अपि तत्रैव । ण च सव्वण्णू वि इमं, सवमामावा वयति परिकहिउं । न य विदुवमे वि चरिसं, सिद्धसुहस्सावरं अत्थि ॥ १ ॥ इति धर्मसंग्रहणौ ॥ जह नाम कोइ मिच्छो नगरगुणे बहुगुणे वियाणंतो । न चयइ परिकहेउं उवमाए तहिं असंतीए ॥ १ ॥ जह सव्वकामगुणियं पुरिसो भोत्तूण भोयणं कोइ । तण्हाछुहाविमुक्को अच्छिज्ज जहा अमियतित्तो ॥ २ ॥ इत्याद्यप्यत्र ॥

मिति चेत्, न। मूर्च्छाद्यवस्थायामप्यात्मानुभूयमानदुःखनिवृत्तेरेव सुखहेतुत्वात्तस्याश्च मुक्तावप्यव्याहतत्वात्, तथापि सिद्धत्वमष्टकर्म
क्षयजनितः साद्यनन्तः पारिणामिको भावः, सिद्धिसुखं च वेदनीयकर्मक्षयजनितम्, इति कथं चारो मुक्तिः सिद्धत्वमेवान
न्तसुखमिति समानियतत्वेन चैक्याभावे सिद्धगुणाष्टकोपवर्णकव्याघात इति सिद्धत्वग्रहणेऽप्यनन्तसुखाग्रहणान्न्यूनत्वदोषः
सूत्रस्यापरिहृत एवेति चेन्नैवम्, सिद्धत्वेनानन्तं सुखमुपलक्ष्यत इति न न्यूनत्वमित्यत्र तात्पर्यात्, अन्यथोपलक्षणत्वेनाविवक्षायां
च सूत्रकर्तुः स्वतन्त्रेच्छत्वस्यैव शरणत्वात्, अत एवोक्तं कण्ठरवेण विहितसद्वयाख्यावाचः क्षमाश्रमणपादाः, " तस्सोदइमा-
ईआ भवत्थं च विणिवत्तए समयं । सम्मत्तनाणदंसणसुहसिद्धत्ताइं मोत्तूणं ॥१॥ " इति, इत्यपर इति (१०४-२-७) तौतातित
इत्यर्थः । तदाहुरुदयनाचार्याः "नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः" इति तौतातिता इति, सोऽपीति, मुक्त्यागमबा-
धश्च तौतातितस्य, सुखमात्रस्याऽदृष्टजन्यत्वेन नित्यसुखे मानाभावादात्मरूपस्यैव सुखस्योपगमे तन्नित्यतया सुखनित्यत्वे
संसारदशायामप्यात्माभिन्नतदभिव्यक्तौ मुक्तिप्रसंगाद्दुःखात्यन्तनिवृत्तेरेव नित्यसुखत्वप्रकारकाभिव्यक्तिहेतुत्वे विशेषणासिद्ध्या
तस्याप्रमत्वनकत्वापत्तेरस्यार्थस्य निष्कर्षे नित्यस्य सुखस्याभिव्यक्तिर्नित्या वा सुखाभिव्यक्तिर्मोक्ष इत्यनुच्छिद्यमानसुखज्ञानया
त्मकमोक्षपादिदीधितिकृन्मतस्यैव पर्यायान्तरेणपेशलमतिप्रपञ्चितस्य साम्राज्यापत्तेः, प्रध्यायविदां तु साद्यनन्तं सुखं तादृशी
तदभिव्यक्तिर्वेत्युभयमपि मुक्तौ प्रामाणिकम्, तदाह, ' तदनन्तं सुखमित्यादि ' (१०४-२-७) सातसंवेदनस्येति
(१०४-२-९) सुखमात्रस्य स्वसंवेदनव्याप्यसत्ताकत्वनियमेनासंवेद्यमानस्य सुखत्वविरोधादित्यर्थः । ते वेदान्तिनः, परमा
त्मन इति (१०४-२-९) तस्यैव सच्चिदानन्दरूपत्वेन श्रुत्युक्तत्वादित्यर्थः । एवं सम्प्रधार्यम् (१०४-२-१०) एवं विचार

पीयम्। 'अन्यथा द्वैतमसद्भाविति' (१०४-२-१२) सुखं मम चेत्सुखमयस्य जागरूकत्वादित्यर्थः। अथाऽऽसुसम्याश्चिरेव सुखं ममेति न द्वैतप्रसङ्ग इति यदि विभाव्यते, तदाऽप्यवृत्त्याश्रयाऽनन्तसुखात्मकमायापरिस्थितिरूपमुक्तिपक्षेऽपि न द्वैतप्रसङ्गो भविष्यतीति सन्तोष्टव्यम्, मन्यतामिति (१०४-२-१४) योगधर्ममहिम्ना जातस्य सर्वविषयकज्ञानस्य नाशकाभावेनाकालमनुवृत्तेरित्यर्थः। न च तपोविशेषफलं सार्वज्ञ्यं शापानुग्रहादिसामर्थ्यवत् कस्यचिदेव, मुक्तिस्तु सर्वस्य नित्यसत्यचिदानन्दस्वरूपैवे स्यापि तद् युक्तम्। सार्वज्ञ्यस्यात्मस्वभावतया व्यवस्थापितत्वात्तत्प्रतिबन्धककर्मक्षयस्य सर्वमुक्तसाधारणत्वात्तपोविशेषस्यापि ब्रह्मप्राप्त्यर्थिना सार्वज्ञ्यसिद्धये क्रियमाणत्वाच्चेति दिक्। सौगतमतमुपन्यस्य दूषयति येऽपीत्यादिना (१०४-२-१४) 'प्रदीपेत्यादि' (१०५-१-१) प्रदीपनिर्वाणोपमं ध्वान्तस्य निर्वाणमित्येतन्मतं यथा मुक्त्यभ्युपायेन च बाध्यते पूर्वापरस्यात उत्कृष्टत्वस्यप्रमाणस्त्वदर्थिमानपरस्योपयोगयुक्तिभावाभावस्य निर्हेतुकत्वाभ्युपगमेन कारणबाधाच्च तथा "निरास्रवचित्तसन्तानोत्पत्तिर्मुक्तिः" इति मतमपि आश्रवानाश्रवचित्तानां बन्धमोक्षसामानाधिकरण्यानुरोधार्थमेकद्रव्यान्वयाभ्युपगमावश्यकत्वे केवल पर्यायोऽपयकमप्यनुस्मृतिभावादाश्रवचित्तध्वंसरूपायास्तस्या निर्हेतुकत्वेनाभ्युपायबाधाच्च, तथा च मोक्षः पुरुषार्थो न स्यात् अनाश्रवचित्तक्षणेभ्योऽपि नातिमहीकृत्य तदपचितये परमाश्रवचित्तक्षणस्य हेतुत्वे सर्वैकक्षणस्य कार्यकारणकोटिमध्यप्रवेशे विनिगमकाभावस्तत्पक्षपात कुर्वद्रूपतानियमे प्रत्यक्षबाध तादृशेऽप्यं कार्यकारणभावो व्यावहारिकस्त्वन्य एवेति न मोक्षार्थ मायासूनवीपक्षासिद्धदीक्षादिग्रहणानुपपत्तिरिति चेत्, न। चिदात्मनः परिणामित्वमविद्यादिसम्बन्धान्यथानुपपत्त्यन्तरं योग सामर्थ्यनाश्यं तन्मुक्तियोग्यतां च व्यवहारतो मोक्षार्थिप्रवृत्तेः कथमप्यघटनाच्चितयोपगमे च स्याद्वादिमतस्यैव साम्रा

न्यायादित्यधिकं समर्थितमनेकान्तव्यवस्थायामस्माभिः । 'शरीरेणेति' (१०५-१-३) शरीरनिवृत्तिरूपे मोक्षे शरीरसद्भावस्थितितत्त्वज्ञानस्य हेतुत्वायोगादित्यर्थः । साक्षादिति (१०५-१-४) साक्षात्काररूपम् अपरोक्षमिथ्याज्ञानेऽपरोक्षतत्त्वज्ञानस्यैव नाशकत्वादिग्मोहादौ तथा दर्शनादिति भावः । शरीराभावे (१०५-१-५) इति साक्षात्तत्त्वज्ञानस्य शरीरनिवृत्तिरूपमोक्षहेतुत्वे तदुत्पत्त्यनन्तरं तदभावस्य पश्चादापत्तेरिति भावः । ननु तत्त्वज्ञानस्य मिथ्याज्ञानादिनिवृत्तिद्वारा शरीरान्तरानुत्पत्तौ कारणता । तथा च न्यायसूत्रं द्वितीयं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति । एवं चोत्पन्नतत्त्वज्ञानस्य यावच्छरीरस्थिति नोपदेशविरोध इत्याशङ्क्य दूषयितुमाह, यदि पुनरित्यादिना (१०५-१-६) उपात्तशरीरस्यापीति (१०५-१-९) एकविंशतिभेदभिन्नदुःखनिवृत्तेरेव नैयायिकसाम्प्रदायिकैर्मोक्षत्वाभिधानादुक्तसूत्रस्य चार्थसिद्धक्रमाभिधानपरत्वादिति भावः । वस्तुतो "सुखदुःखसवासविच्छेदो मुक्तिः, इत्यपि तन्मतमप्ययुक्तम्, उत्पन्नदुःखविच्छेदस्य स्वत एव नाशादनुत्पन्नस्य च नाशयितुमशक्यत्वात्, न च परमपुरुषार्थसुखसाधनत्वज्ञानं समाश्रयतीति न मुक्तेरपुरुषार्थत्वमित्यपि युक्तम्, दुःखे प्रवृत्तेः कथमपि कस्याप्ययोगात् पुरुषार्थसमानसिद्धत्वेन कर्मवासनाच्छेदकत्वात् सुखान्तमुक्तेरसम्भवप्रसङ्गाच्चेति दिक् । तथा चारित्रसहितमिति (१०५-२-३) ननु केवलज्ञानस्यैव यथाख्यातचारित्रस्य परनिःश्रेयसरूपफलजनने विलम्बस्तुल्य एव परमशुक्लध्यानरूपसमाधेरविलम्बेन तदुत्पत्त्युपगमे च तस्यैव परनिःश्रेयसहेतुत्वमुच्यतां किं ज्ञानचारित्रयोस्तत्कल्पनयेति चेत् न, अन्वयव्यतिरेकाभ्यामागमाच्च ज्ञानचारित्रयोः परनिःश्रेयसहेतुत्वसिद्धावुक्तसमाधेर्द्वारत्वकल्पनेनाविरोधात्, न च मिथ्याज्ञानवासनायाः संसार

णीयम्। 'अन्यथा द्वैतप्रसङ्गादिति' (१०४–२–१२) सुखं ब्रह्म चेत्सुखमयस्य आत्मरूपत्वादित्यर्थः। अथासुखव्याहृत्तिरेव सुख मक्षेति न द्वैतप्रसङ्ग इति यदि विभाव्यते, तदाऽद्वयस्यात्मनोऽनन्तगुणात्मत्वस्वभावस्थितिरूपमुक्तिवादेऽपि न द्वैतप्रसङ्गो भविष्यतीति सन्तोष्टव्यम्, अन्यतामिति (१०४–२–१४) योगधर्ममहिम्ना जातस्य सर्वविषयकज्ञानस्य नाशकाभावेनाकालमनुवृत्तेरित्यर्थः। न च तपोविशेषफलं सार्वज्ञ्यं शापानुग्रहादिसामर्थ्यवत् कस्यचिदेव, मुक्तिस्तु सर्वस्य नित्यसत्यचिदानन्दस्वरूपेणैस्यापि भवितुं युक्तम्। सार्वज्ञ्यस्यात्मस्वभावतया व्यवस्थापितत्वात्तत्प्रतिबन्धककर्मक्षयस्य सर्वमुक्तसाधारणत्वात्तपोविशेषस्यापि प्रथमावस्थायिना सार्वज्ञ्यसिद्धये क्रियमाणत्वाच्चेति दिक्। सौगतमतमुपन्यस्य दूषयति येऽपीत्यादिना (१०४–२–१४) 'प्रदीपेत्यादि' (१०५–१–१) प्रदीपनिर्वाणोपमं शान्तस्य निर्वाणमित्येतन्मतं यथा युक्त्याभ्युपायेन च बाध्यते पूर्वापरस्यात उत्कर्षमात्मप्रतीतस्वदर्शिप्रवृत्त्योपयिकयुक्तिबाधाभावस्य निर्हेतुकत्वाभ्युपगमेन कारणाभावाच्च तथा "निराश्रयचित्तसन्तानोत्पत्तिर्मुक्तिः" इति मतमपि आश्रयानाश्रयचित्तानां बन्धमोक्षसामानाधिकरण्यानुरोधार्थमेकत्वस्यान्यथाश्रयणादन्यपक्षे केवल चर्योपरेकपक्षप्रत्यक्षयुक्तिबाधाद्राश्रयचित्तध्वंसरूपायास्तस्या निर्हेतुकत्वेनाभ्युपायत्वाभावाच्च, तथा च मोक्षः पुरुषार्थो न स्यात् अनाश्रयचित्तक्षणेभ्यो जातिमङ्गीकृत्य तदवच्छिन्ने परमाश्रयचित्तक्षणस्य हेतुत्वे स्वैकक्षणस्य कार्यकारणकोटिमप्रवेशे विनिगमकाभावात्तत्क्षणस्य पूर्वेद्युत्पत्तानिमित्ते ग्रहणमात्र तात्त्विकोऽयं कार्यकारणभावो व्यावहारिकस्त्वन्य एवेति न मोक्षार्थमाचारप्रवृत्तिपद्धतिसिद्धदीक्षादिग्रहणानुपपत्तिरिति चेत्, न। चिदात्मनः परिणामित्वमचिदादिशब्दवाच्यमर्थान्तरं योगसामर्थ्येनाप्यं तन्मुक्तियोग्यतां च व्यवहारतो मोक्षार्थिप्रवृत्तेः कथमप्यघटनाच्चेतियोपगमे च स्याद्वादिमतस्यैव साम्रा

हेतुत्वाविरोधित्वप्रज्ञानस्यैवोक्तसमाप्तिद्वारामुक्तिहेतुत्वमिति वाच्यम् । उक्तसमाप्तिरपि मुक्तिवत्कालान्तरभावित्वेन तत्रापि कर्मनिर्जराद्वारा ज्ञानस्य हेतुत्वं कल्पनीये मुक्तावेव ज्ञानकर्मणोस्तुल्यवत् समुच्चयबोधकागमेन ज्ञानवच्चारित्रस्यापि हेतुताया अपर्जनीयत्वात् । न च "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति वचनात् सञ्चितकर्मनाशे ज्ञानमेव कारणं प्रारब्ध-नाशस्तु भोगादेव, क्रियमाणं तु योगिकर्ममिथ्याज्ञानवासनाभावाभावादनुत्पादकमिति न क्वापि चारित्रोपयोग इति वक्तव्यम्, ज्ञानाग्निरित्यादेर्ज्ञानस्तुतिमात्रपरत्वात्, सद्बोधावच्छेदकत्वे ज्ञानचारित्रयोः स्वस्वजन्यकर्मनाशे पृथग्हेतुत्वावश्यकत्वाद्विना चारित्र व्यापारमौपक्रमिककर्मोपभोगस्य कथमप्यनुपपद्यः, सम्मतश्चायमर्थः, "तमुक्तस्य यथा चर्म यथा ताम्रस्य कालिका । नश्यति क्रियया पुंसः पुरुषस्य तथा मलम्" ॥१॥ इत्यादि वाशिष्ठग्रन्थादिनापि, नयवादास्तु तपःसंयमज्ञानानां मुक्तिहेतुत्वे भिन्नरुचिरूपतयैव व्यवतिष्ठन्ते, तथा च पारमर्षम् । "तवसंजमो अणुमओ निग्गंथं पवयणं च ववहारे । सुद्धसुयाणं पुण निव्वाणं संजमो चेवत्ति" ॥१॥ अलमतिविस्तरेण, गुणानां (१०५–२–७) महदादिपरिणामानाम्, संसारोपपत्तेः (१०५–२–७) संसारसम्बन्धदर्शनात्, परेषां (१०५–२–८) सांख्यानाम् संसृत्या (१०५–२–८) उपचारमात्रेण, तत्कारणः (१०५–२–८) तन्मात्रकारणकः, तेन नोपक्रमोपसंहारविरोधः, कारणं चात्रोपादानरूपं ग्राह्यं तेन न वक्ष्यमाणवाच्यास्यनुपपत्तिः, सिद्धान्ते मिथ्याज्ञानादिरत्यादिनानार्थसारोपादानामुपगमेऽपि तद्विशिष्टात्मनः कारणस्यैकत्वान्न काप्याशङ्का, पर्यायार्थतया नानोपादानत्वस्य द्रव्यार्थतयैकोपादानत्वस्य चाविरोधादिति द्रष्टव्यम् । भाष्ये कैमर्थक्येति (१०६–१–२) मत्वर्थीयाच्च किमर्थस्पर्धः । निक्षेपेर्थनिक्षेपणमेव द्रष्टव्यम् । तत्र सुमवादी, साङ्कर्यम् (१०६–१–४) अन्यत्र परित्यज्यातीयत्वम्, विविधाभिसन्धित्वात्तु

'अप्रतिसंविदिताकारेत्यादि' (१०७-१-३) इच्छायाः स्वसमानाधिकरणज्ञानविषयत्वनियमेनाज्ञातत्वसम्भव इत्यर्थः। तदनियम एवेति (१०७-१-११) शास्त्रादिप्रवृत्तेरिच्छापूर्वकत्वानियम एवेत्यर्थः। ननु वचनमात्रे विवक्षाया हेतुत्वाभावनियमो मविष्यतीत्यत आह, 'ततश्चैतन्येत्यादि' (१०७-१-१२) चैतन्यकरणपाटवे तावद्वचने प्रतिनियतो हेतुः, विवक्षा तु कण्ठाद्यभिघातजनकप्रयत्नजनकेच्छाजनकेष्टसाधनताज्ञानविषयस्येष्टतासम्पादनार्थं क्वचिदुपयुज्यमाना न नियतहेतुर्वचनहेतोः कण्ठाद्यभिघातस्य विनापीच्छां गोत्रस्खलनादावदृष्टविशेषादुपपत्तेस्तद्वदेव वीतरागस्याप्यनाकुलभावस्तीर्थकरनामकर्मोदयसामर्थ्यादुपपत्तेरिति निगर्वः। ननु ह्रस्वभावनाकुलभावो दोषमहिम्ना दर्शनादोषभावेऽपि हेतुत्वं साध्यमानं च न निर्दोषस्य सर्वस्य तदुपपत्तिरित्याशङ्क्याह भाष्यकृत्, 'न चेत्यादि' (१०७-२-४) शास्त्रप्रकर्षापकर्षयोर्दोषजातिप्रकर्षापकर्षानुविधायित्वाभावात्तस्यास्तेतुत्वमिति भावः। वाञ्छन्तो वेति (१०७-२-८) वा शब्दोऽप्यर्थः, वक्तुमित्यध्याहार्यम्। तथा च वक्तुं वाञ्छन्तोऽपि मन्दबुद्धयः शास्त्राणां वक्तारो न भवन्तीति विवक्षावचनेन नियतहेतुरिति निर्व्यूढं भाष्ये, बाधनमिति (१०७-२-१०) करणे नट् बाधकमित्यर्थः। परमतापेक्षमिति (१०७-२-१०) परमतस्थस्य वस्तुनः प्रसिद्धत्वाभावादित्यर्थः। परमतप्रसिद्धेनैकान्तनित्यत्वादिना स्वादिष्टमनेकान्तत्वं न बाध्यते तत्प्रसिद्धेरप्रामाण्यशङ्काकलङ्कितत्वात्, स्वादिष्टत्वे च विपर्यये व्याघातदण्डभयेनैव विरोधिशङ्कानुत्थानादिति निर्गलितोऽर्थः, 'तदुच्यते च्छेदनार्थमपीति' (१०७-२-१४) अयमर्थः हि सकलगिरिपरत्वेन प्रमाणम्, अनुमानं तु समारोपव्यवच्छेदकत्वेन च योगिप्रत्यक्षस्यानुमानमूलव्याप्तिग्राहकत्वाभ्युपगमे तत एव समारोपनिवृत्तौ क्वचिदनुमानप्रमाणप्रवर्तेत्यपेरर्थ, 'पूर्वापरेति (१०८-१-१) पूर्वं कारणमपरं कार्यं तयोः परामर्शस्तद्ग्रहज्ञान

( १०५-१-१० ) कार्यस्वभावप्रतिबद्धस्यास्य भावस्योपलम्भादन्यत्र तादृगनुमानसद्भावेऽप्यनाश्वासप्रसङ्गादित्यर्थः । दुर्लभमवि नियमतायां विशिष्टनियमयोर्लम्भेऽकाष्ठजातीयादपि वह्निजातीयदर्शनादित्यर्थः, कथमिव निर्णयिसेति (१०९-१-१२) अत्र द्विजातीयादपि धूमजातीयसम्भावनादित्यर्थः, वृक्षः शिंशपात्वादिति इत्यपि कथमिव निर्णयेवेति योजनीयम् । लतेति (१०५-१-१५) वृक्षादेर्वृक्षत्वव्यभिचारित्वेन तज्जातीयतया शिंशपायामपि वृक्षत्वव्यभिचारसंशयसम्भवादित्यर्थः 'भवतेति' भवते वस्तुन्येकान्ततः संशयनादिना सौगतानामित्यर्थः । सोऽपि प्रतीतेरपलापकः (१०६-२-२) सोऽपि सौगतः प्रतीयमानापह्नवकारी, कार्यस्येति कार्यस्य वह्न्यादेः, तादृशतया वह्नित्वादिनैकजातीयतया, प्रतीयमानस्यापि ज्ञायमानस्यापि, कारणविशेषस्य काष्ठादेः, व्यतिवृत्तेरविक्रमस्य, दर्शनात्, ननु काष्ठादिजन्यतावच्छेदकतया यदि वैजात्यं कल्पयिष्यते तदव्यभिचारेण कारणविशेषोऽनुमास्यत इत्येवं न प्रतीत्यपलापो विशेषापरिज्ञानं तु पुरुषदोषो न तु वस्तुदोष इति नानुपपत्तिरिति मनसि कृत्याह भाष्यकृत् यत्नत इत्यादि, यत्नतः परीक्षित (१०६-२-३) इत्येवरूपा विशेषे पर्यवसायितम्, कार्यं कारणं नातिवर्तते (१०५-२-३) कारणव्यभिचारशङ्कास्पदं न भवतीत्यर्थः । स्तुत प्रस्तुतमिति (१०५-२-३) अस्माभिः प्रकृतं त्वयाऽभीष्टत्वेन स्तुतिविषयीकृतमित्यर्थः । अनतिवृत्तिरव्यभिचारः, (१०६-२-४) उपवर्ण्यत इति (१०६-२-११) अत्यन्तविरस्कृतमप्यनिमाहिमेत्यर्थः । अनिर्वचनीयप्रमाणात्स्वत्वं व्यवहार्यम्, कथिदविप्रतिपत्तावपीति सुप्तस्यापि निराकृताक्षोऽभिमानेनोपलम्भादित्यर्थः । पुनः स्मर्यतेति (१०७-१-२) इच्छानुभवस्येच्छास्मृतौ हेतुत्वादित्यर्थः । न च सर्वत्र सुप्तोत्थितेन तस्मात्सुप्तोत्थापनाकृतयत्नोत्तर प्रवृत्तिविशिष्टकारेच्छा नास्तीति भावः । तदभावनया सा तदा भविष्यतीत्याशङ्क्ये-

पूर्वकान्वयव्यतिरेकादिज्ञानं तथाऽन्यत्वाद्देकोपयोगापरिणतत्वात्, अभिलापसंसर्गरहितस्याध्यक्षविषयत्वात्, विचारस्य च प्रातिस्विकव्यापारपरिषये ध्यक्षापेक्षेनैव पर्यवसानादिति भावः। प्रत्यक्षानुपलम्भसहकारिण (१०८-१-५) इति प्रत्यक्षं यत्र धूमस्तत्राग्निरित्यन्वयसहचारज्ञानम्, अनुपलम्भो यत्राग्निर्नास्ति तत्र धूमोऽपि नास्तीति व्यतिरेकसहचारज्ञानं तौ सहकारिणौ यस्य स तथा तस्येत्यर्थः। 'यतस्तथेति' (१०८-१-९) तत्प्रकारकज्ञानस्यैव तदभावप्रकारकज्ञानविरोधित्वेन निर्विकल्पकस्य च तथात्वेन समारोपाविरोधित्वादित्यर्थः। सन्निधानामेवात्(१०८-१-१०) सन्निधानतुल्यत्वात्, भावाभावयोरिति (१०८-१-१४) पक्षाभावे पक्षाभावः पक्षभावे च पक्षभावत्वं प्रति तस्य साधकतमत्वमित्यर्थः ॥६॥ संविदनाद्वैतवाद्याह–

**त्वन्मतामृतबाह्यानां सर्वथैकान्तवादिनाम्। आप्ताभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते ॥७॥**

त्वन्मतमनेकान्तात्मकं वस्तु तज्ज्ञानं च। तदेवामृतम्, अमृतस्य मोक्षस्य कारणत्वात् सर्वथा निर्बाधत्वेन परितोषकारित्वाच्च। ततो बाह्याः सर्वथैकान्तास्तदभिनिवेशिनश्च वादिनः। ते चाप्ताभिमानदग्धा एव विसंवादकत्वेन वस्तुतोऽनाप्तत्वादप्यभ्रा इत्यभिमानेन स्वरूपाल्लम्भावितत्वाद्दग्धा इव दग्धा इति समाधिवचनत्वात्, तेषां स्वेष्टस्य सर्वथैकान्तस्य दृष्टबाधनात्। अनेकान्तात्मकवस्तुसाधारणं बहिरन्तश्च सकलजगत्साक्षीभूतं विपक्षे प्रत्यक्षविरोधकवचमनेन दर्शयति। सर्वथैकान्तविरोधस्यानेकान्तात्मकवस्तुसाधारणलक्षणत्वात्, बहिरिवान्तरपि तत्त्वस्यानेकान्तात्मकतया सकलदेशकालवर्तिप्राणिभिरनुभवनात् सुनिश्चितासंभवद्बाधकप्रमाणत्वसिद्धेः। न हि चित्रज्ञानप्रतिभासं सदसन्नित्यानित्याद्येकान्तरूपं स्वसंवेदनमन्यद्वा संपश्यामो यथात्र प्रतिभासते, चित्रज्ञानवत्क्षयचिरस्थायिनि विशेषात्मनः सुखादिचैतन्यस्य सर्वदर्शनाधारात्मनः स्कन्धस्य च प्रेक्षणात्। स्यान्मतं "सुखादिचैतन्यमसदृशविवर्त्तात्मक-

तत्त्वेऽपि मानापेक्षादिनिमित्तस्य भावाविशेषात् । अन्यथैकं नीलवेदनमपि प्रतिपरमाणु भेदात्स्वसंविदो परस्परं भिन्नैर्भवित-व्यम् । तथैकनीलपरमाणुसंवेदनस्याप्येकं वेद्यवेदकसंवित्त्याकारभेदाद्भिन्नत्वेन भवितव्यम् । वेद्याकारादिसंवेदनत्रयस्यापि प्रत्येकमपरस्वसंवेदनत्रयमेवमत्रयेण इति परापरवेदनत्रयकल्पनायामनवस्थानात् क्वचिदेकवेदनसिद्धिः संविदद्वैतविविक्तिषाम् । क्वचिदप्येकाकारत्वा-भ्युपगमे च कुतो नानात्मव्यवस्था ? वस्तुन्येकत्रापरैकवस्त्वपेक्षयानेकत्वव्यवस्थोपपत्तेः । क्वचिदेकत्वोपगमे वा कथं चित्रमतो नैकत्वसिद्धिः ? चित्राकारतयापि तस्य भावात् । इति कश्चित्, सोऽप्यप्रेक्षापूर्वकारी, तथा सति चित्रज्ञाने संविदाकार-स्यैकस्य पीताकारस्य नीलाकारस्य च सद्भावसिद्धौ परस्परापेक्षयानेकत्वसिद्धेरनेकत्वव्यवस्थापनात्तस्यानेकाकारस्य चित्रज्ञानसाम्ये अनेकात्मकत्वसाधने निदर्शनत्वोपपत्तेः । स्यान्मतं सुखादीनां चैतन्यं व्यापकं भवत् किमेकेन स्वभावेन भवत्यनेकेन स्वभावेन वा ? यद्येकेन तदा तेषामेकत्वप्रसक्तिरिति । अथानेकेन तदा सोऽप्यनेकस्वभावः परेणानेकेन स्वभावेन व्याप्तव्य इत्यनवस्था । यदेकादेकेन स्वभावेन सुखादिपर्यायमेकत्वेन व्याप्यस्ते तदानेकेन स्वभावेन समालीढेनेत्युक्तं स्यात् । तत्र च सैवानवस्था । न च गत्यन्तर-मस्ति येन सुखादिव्यापकं चैतन्यं सिध्यतीति । चित्रविज्ञानेऽपि समानम् । तस्य पीताद्याकारव्यापिनः स्वयं संवेद्यमाने दोष इति चेन्न सुखादिव्यापिनश्चैतन्यस्य भाव अन्येन च स्वयं संवेद्यमानत्वमुपलभ्यमानः स्यात् ? न हि दृष्टेऽनुपपन्नं नाम । न च सुखादीनां चैतन्यव्यापकत्वमसिद्धं नाम, अचेतनत्वप्रसङ्गाभावात् । अचेतनाः सुखादयः, उत्पत्तिमत्त्वाद्, घटादिवदित्यनुमानं सुखादिचैतन्य-व्यापकत्वबाधकमिति चेत्, न, तस्य प्रत्यक्षबाधितविषयत्वात्, चिद्रूपतयैव सुखादीनां स्वसंवेदनप्रत्यक्षे सर्वदाप्रतिभासनात् । अनुमानवि-रुद्धश्च पक्षः । तथा हि । चेतना सुखादयः, स्वसंवेद्यत्वात् पुरुषवत् । पुरुषस्य स्वसंवेद्यत्वमसिद्धमिति चेत्, न

ज्ञानादिवत्स्वसंवेद्यत्वाप्रतीतेस्तथा वक्तुमशक्तेः, अन्यथा पुरुषस्य स्वसंवेद्यसुखादिसंबन्धात्स्वसंवेद्यत्वं न स्यादिति वक्तो निवारयितुमश-
क्यत्वात्, चैतन्यविशेषेण हेतोर्व्यभिचारप्रतिपादनात्, न ततोऽचेतनत्वसिद्धिः, सुखादीनाम्। न चैषां चेतनत्वसाधनेऽपसिद्धान्तः स्या-
द्वादिनां प्रसङ्गेन, चैतन्यवीर्यद्रव्यार्थादेशाच्चेतनत्वप्रसिद्धेः, सम्यक्त्वौपशमिकादिभावानां सुखज्ञानादिभिन्नविनिश्चयपर्यायार्थादेशेन सुखादीनां
ज्ञानदर्शनाभ्यामन्यत्ववचनात्। तथापि ज्ञानात्मकाः सुखादयो, ज्ञानाभिन्नहेतुकत्वाद्विज्ञानान्तरवदिति चेत्, न, सर्वथा विज्ञानाभिन्न
हेतुकत्वासिद्धत्वात्, सुखादीनां सद्वेद्योदयादिनिमित्तत्वाद्विज्ञानस्य ज्ञानावरणाद्यपशमादिनिबन्धनत्वात्। कथञ्चिद्विज्ञानाभिन्न
हेतुकत्वं तु रूपालोकादिभिरनैकान्तिकं, यथैव हि ततो विज्ञानस्योत्पत्तिस्तथा रूपालोकादिक्षणान्तरोत्पत्तिरपीति परैः स्वयमभिधानात्।
तदेतेन यदभ्यधायि "तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः। तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम्" ॥१॥ इति तदपास्तं, सुखादीनां
विज्ञानरूपत्वासिद्धेः। "सुखमाह्लादनाकारं विज्ञानं मेयबोधनम्। शक्तिः क्रियानुमेया स्याद्यूनः कान्तासमागमे" ॥१॥ इति वचना-
त्तद्रूपाः सुखादय इति। तद्रूपाणां तद्रूपोपादानत्वे सर्वस्य सर्वोपादानत्वप्रसक्तिः। न च सुखादयो विज्ञानाभिन्नोपादानाः स्युः।
विज्ञानाभिन्नसहकारित्वं तु यथा सुखादीनां तथा रूपादीनामपि। इति तदप्येषां विज्ञानात्मकत्वसाधने रूपादीनामपि तथात्वसाधनं
स्यात्। तदुक्तं "तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः। तद्रूपादि किमज्ञानं विज्ञानाभिन्नहेतुजम्" ॥१॥ इति। यदि पुनरिन्द्रियहेतुकत्वं
विज्ञानाभिन्नहेतुकत्वमित्यभिधीयते, तदपि न सुखादीनां ज्ञानत्वं साधयति, द्रव्येन्द्रियादिभिर्व्यभिचारात्। इति नैकान्ततो ज्ञाना-
त्मकाः सुखादयो, द्रव्यार्थत एव तेषां चेतनत्वोपपत्तेः, चेतनद्रव्यादात्मनोऽनर्थान्तरभूतानामचेतनत्वविरोधात्। एतेन ज्ञानपर्यायान्तर
भूतत्वात्सुखादीनामचेतनत्वमेवेति वदन्तोऽपास्ताः प्रत्येतव्याः, चेतनादात्मनोऽपर्यायान्तरत्वेन कथञ्चिच्चेतनत्वसिद्धेः। आत्मनश्चेतनत्वम

यावन्मूर्त्यन्तरानुकारी प्रत्यक्षे स्वसमर्पणेन प्रत्यक्षतासीकरणात्, सर्वथा विचार्यमाणस्यापि घटनात् । विचारयिष्यते चैतदुपरिष्टात् ।

अपरः प्राह, स्कन्ध एव न वर्णात्मकस्ततोऽन्ये सन्ति, तस्यैव मधुरादिकरणभेदाद्वर्णादिभेदप्रतिभासनात्, किञ्चिदङ्गुलिपिहितनयनभेदाद्गरीरकलिकाभेदप्रतिभासनवदिति तदप्यसम्यक्, सत्ताद्वैतप्रसङ्गात् । शक्यं हि वक्तुं सत्तैवैका, न द्रव्यादयस्ततोऽर्थान्तरभूताः सन्ति, कल्पनाभेदादनेकप्रतिभासनादिति । न चैतद्युक्तमिति निवेदयिष्यते । ततश्चित्रज्ञानवन्न केवलं सुखाद्याकारसमन्वितस्य प्रेक्षणं सिद्धम् । किं तर्हि ? वर्णसंस्थानाद्यात्मनः रूपस्यापि । ततः सूक्तं न हि किञ्चिद्रूपान्तरविकलं सर्वैकान्तरूपमसर्वैकान्तरूपं वा, नित्यैकान्तरूपमनित्यैकान्तरूपं वा, अद्वैतैकान्तरूपं द्वैताद्येकान्तरूपं वा, संवेदनमन्यस्तत्त्वमन्यद्वेत्यस्य संपश्यामो, यथा प्रतिज्ञायते सर्वथैकान्तवादिभिरिति । सामान्यविशेषैकात्मनः संवित्तिरेकान्तस्यानुपलब्धिर्वा सर्वतः सिद्धा मधुरादिमतामनादिकल्पनामस्वलक्षणम यतीति किं नः प्रमाणान्तरेण । न तावत्सामान्यैकान्तस्योपलब्धिर्विशेषस्याप्युपलब्धेः । नापि विशेषैकान्तस्य, सामान्यस्यापीक्षणात् । न सामान्यविशेषैकान्तयोरेव परस्परनिरपेक्षयोः, एकात्मनोऽप्युपलक्षणात् । न चैकात्मन एव सामान्यविशेषैकात्मनः, ततो जात्यन्तरस्य संवित्तेः । सर्वं हि वस्तु सामान्यं विशेषापेक्षया विशेषः सामान्यापेक्षया वाऽपोद्धारकल्पनायां, स्वरूपेण तु सामान्यविशेषात्मकमेकम् । तस्य संवित्तिर्मधुरादिमतामनादिकल्पनामस्वलक्षणमपि, मधुरादिविकल्पनामेव तत्संभवात् । एकान्तस्यानुपलब्धिर्वा नामस्वलक्षणमपि तत एव । तथा हि । नास्ति सर्वथैकान्तः, सर्वदानेकान्तोपलब्धेरिति स्वभावविरुद्धोपलब्धिः, नास्ति सर्वथैकान्तोऽनुपलब्धेरिति स्वभावानुपलब्धिर्वा सर्वतमधुरादेः संवेदनासिद्धाऽप्यवसीयते । ननु च ' सर्वथैकान्तस्य क्वचित्कदाचिदनुपलब्धौ न सर्वत्र सर्वदा प्रतिषेधः सिद्ध्येत् । तस्यानुपलब्धौ मानेकान्तेन विरोधः, सत एव क्वचित्कस्यचिदपि विरोधप्रतीतेः । प्रतिषेधश्च न स्यात्, सत एव । ' इति कश्चि

ततो न ज्ञानाज्ञानमात्रनिबन्धनौ जयपराजयौ व्यवस्थाप्यौ, यथोक्तदोषोपनिपातात् । स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ तु तौ निर-
वद्यौ, पक्षप्रतिपक्षपरिग्रहवैयर्थ्याभावात् कस्यचित्तूष्णीम्भावेऽपि स्वपक्षसिद्धौ तु स्थितायां परस्य पक्षसिद्धेरसंभवात् सकृज्जयपराजययो-
रप्रसक्तेः । न हि वादिना साध्याविनाभावनियमलक्षणेन हेतुना स्वपक्षसिद्धौ विधातुं सभ्यानामपि प्रतिज्ञोदाहरणादिवचनमनर्थकम
यत्रवाक्य प्रकल्प्यते, तदभावादेवाचरतः प्रतिपक्षासिद्धेः, प्रतिपाद्यस्यानुरोधस्तत्प्रयोगात्तत्प्रतिपत्तिविशेषस्य प्रयोजनस्य सद्भावात् ।
मपि हेतोर्विरुद्धत्वोद्भावनादेव प्रतिवादिनः स्वपक्षसिद्धौ सत्यामपि दोषान्तरानुद्भावनं तस्य पराजयाय प्रकल्प्यते, तत एव । एतेन स्वपक्ष
सिद्धौ सत्यामपि परपक्षनिराकरणं, तस्मिन्वा स्वपक्षसाधनाभिधानं च वादिप्रतिवादिनोर्जयपराजयनिबन्धनमिति प्रतिपादितं बोद्धव्यम् ।
तदेवं साधर्म्यवैधर्म्ययोरन्यतरेणार्थगतौ तदुभयवचनं वादिनो निग्रहाधिकरणमित्ययुक्तं च व्यवस्थितम् । प्रतिज्ञादिवचनं निग्रहस्थान
मित्येतदप्ययुक्तमिति चेत्, उच्यते । प्रतिज्ञानुपयोगे शास्त्रादिष्वपि नाभिधीयेत, विशेषाभावात् । न हि शास्त्रे प्रतिज्ञा नाभिधीयते एव
अनित्यः शब्दो वा, अग्निरत्र धूमात्, इत्येवं शिंशपात्वादित्यादिवचनानां शास्त्रे दर्शनात्, विरुद्धोऽयं हेतुरसिद्धोऽयमित्यादिप्रतिज्ञावचना-
नामनियतकथायां प्रयोगात् । परानुग्रहप्रवृत्तानां शास्त्रकाराणां प्रतिपाद्यावबोधनाधीनधियां शास्त्रादौ प्रतिज्ञाप्रयोगो युक्तिमानेव, तपयो
गित्वात्तस्येति चेत्, वादेऽपि सोऽस्तु, तत्रापि तेषां तादृक्त्वात्, वादेऽपि विजिगीषुप्रतिपादनायाचार्याणां प्रवृत्तेः । नियतकथायां प्रतिज्ञाया न
प्रयोगो युक्तः, तद्विषयस्यार्थस्य गम्यमानस्याभिगमनादिति चेत्, तत एव शास्त्रादिष्वपि । न हि तत्र जिगीषवो न प्रतिपाद्याः प्रतिज्ञादि
विषयो वा सामर्थ्येन गम्यते । शास्त्रादावजिगीषूणामपि प्रतिपाद्यत्वात् प्रतिज्ञादेरप्रयोगे केषाञ्चिन्मन्दधियां प्रकृतार्थाप्रतिपत्तेर्गम्यमा
नस्य विषयस्यापि प्रयोगः, तत्प्रतिपत्त्यर्थत्वादिति चेत्, जिगीषवः किमु मन्दमतयो न सन्ति ? येन तथा तेषामप्रतिपद्यमानानां प्रतिपत्तये

प्रतिज्ञादिप्रयोगो न स्यात् इति विशेषाभावादेव शास्त्रादौ वादे च प्रतिज्ञादेरभिधानमनभिधानं वाभ्युपगन्तव्यमविशेषेणैव । ननु च प्रतिज्ञायाः प्रयोगेऽपि हेत्वादिवचनमन्तरेण साध्याप्रसिद्धेर्व्यर्थो प्रतिज्ञा हेत्वादिवचनादेव च साध्यप्रसिद्धेर्निगमनादिवत्तदकिञ्चित्कर मेवेति कश्चित् सोऽपि यत्सत्तत्सर्वं क्षणिकं, यथा घटः, संश्च शब्द इति त्रिलक्षणं हेतुमभिधाय यदि समर्थयते, कथमिव साध्यासंविदे ?, स्वहेतुसमर्थनमन्तरेण तदभिधानेऽपि तदर्थाप्रतिपत्तेः । तदर्थप्रतिपत्तौ समर्थनं वा निगमनादिकं कथमतिरिच्येत ?, अकिञ्चित्करत्वा-विशेषात् ततः पराजयो न भवेत्, तावागतस्य हेत्वाद्यभिधाने तत्समर्थनाभिधाने वा । हेत्वाद्यनभिधाने कस्य समर्थनमिति चेत्, तथा सन्धाया अप्यनभिधाने क्व हेत्वादि प्रवर्तताम् ? गम्यमाने प्रतिज्ञाविषये एवेति चेत्, गम्यमानस्य हेत्वादेः समर्थनमस्तु । गम्यमानस्यापि हेत्वादेर्मन्दप्रतिपत्त्यर्थं वचनमिति चेत्, तथा सन्धावचने कोऽपरितोषः ?, स्यान्मतं, समर्थनं नाम हेतोः साध्येन व्याप्तिं प्रसाध्य धर्मिणि भावसाधनम् । यथा यत्सत् कृतकं वा तत्सर्वमनित्यं यथा घटादिः, सन् कृतको वा शब्द इति । सन् कृतको वा शब्दः, यश्चैवं स सर्वो नश्वरो यथा घटादिरिति वा, प्रयोगक्रमनियमाभावादिष्टार्थसिद्धेरप्रत्यवायाविशेषात्, प्राक् सत्त्वं धर्मिणि प्रसाध्य साध-यस्य पश्चादपि साध्येन व्याप्तिप्रसाधनस्याविरोधात् । व्याप्तिप्रसाधनं पुनर्विपर्यये बाधकप्रमाणोपदर्शनम् । यदि पुनः सर्वं सत्त्वं कृतकं वा प्रतिक्षणविनाशि न स्यादित्ये क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । अर्थक्रियासामर्थ्यं सत्त्वलक्षणमतो व्यावृत्तमित्यसत्त्वमेव तस्य स्यात् । सर्वसामर्थ्योपाख्याविरहलक्षणं हि निरुपाख्यमिति । एवं साधनस्य साध्यविपर्यये बाधकप्रमाणाद्युपदर्शने विरोधाभावात्तस्य विपक्षे भिन्ने दृष्टेरदर्शनेऽपि सन् कृतको वा स्यादित्यप्रेक्षमिश्रितेन शङ्कायाः । ततो व्यतिरेकस्य सन्दिग्धत्वेऽनैकान्तिको हेत्वाभासः स्यात् । न चार्थ-नमात्राद् व्याप्तिः, विपक्षेऽप्यर्थस्य सर्वशक्तिमोऽर्थसामान्यासाधनत्वात्, कर्थाप्यर्थेनेव तत्सामपि वेद्यत्वविरोधात् । वाचकं पुनः

प्रमाणम् । यस्य क्रमयौगपद्याभ्यां न योगो, न तस्य क्वचित्सामर्थ्यम् । अस्ति चाक्षणिके तत् । इति प्रवर्तमानमसामर्थ्यमस्य व्यापक-
नैति । तेन सत्त्वलक्षणं वा तद्व्याप्तमेवेति सिध्यति । तावता च साधनधर्ममात्रान्वयः साध्यधर्मस्य स्वभावहेतुलक्षणं सिद्धं भवति ।
अत्रान्वयदर्शनमप्रमाणं यतः क्रमयौगपद्याऽयोगस्यैवासामर्थ्येन व्याप्तत्वसिद्धेः पूर्वस्यापि हेतोः सत्त्वादेर्न व्याप्तिसिद्धिः । पुनरिहापि
साधनोपगमेऽनवस्थाप्रसङ्ग इति न चोद्यम्, प्रकृतस्याभावसाधनस्यादर्शनस्य प्रमाणत्वाप्रतिषेधात् । यदयं विपर्यये साधयति हेतोः
साध्यविपर्यये यदपि विरुद्धमनुपलभ्यमानाद्बाधकं प्रमाणमुच्यते । एवं हि स हेतुः साध्याभावेऽसन् सिध्येदपि तत्र प्रमाणबाधा स्वविरु-
द्धेन बाध्येत । अन्यथा तत्रास्य बाधकासिद्धौ संशयो दुर्निवारः । न च सर्वोऽनुपलम्भमात्रस्य बाधिका, दृश्यानुपलम्भेनैव तद्बाधक-
त्वात् । तत्र सामर्थ्यं क्रमाक्रमयोगेन व्याप्तं सिद्धं, प्रकारान्तरासंभवात् । तेन व्यापकधर्मानुपलब्धिरक्षणिके सामर्थ्यं बाधते इति क्रमयौ-
गपद्यायोगस्य सामर्थ्याभावेन व्याप्तिसिद्धेर्नानवस्थाप्रसङ्ग इति स्वभावहेतोः समर्थनम् । कार्यहेतोरपि, यत्कार्यं भिन्नं कारणसाधनायो-
पादीयते तस्य तेन सर्वकारणभावप्रदर्शने प्रमाणाभ्याम् । यदेवमस्मिन् सति भवति सत्स्वपि तदन्येषु समर्थेषु तद्धेतुषु, तदभावे न
भवतीति । एवं ह्यस्यासन्दिग्धं तत्कार्यत्वं समर्थितं भवति । अन्यथा केवलं तदभावे न भवतीत्युपदर्शनेऽन्यस्यापि तत्राभावे सन्दिग्ध-
मस्य सामर्थ्यं स्यात्, अन्यत्र समर्थं, तदभावे तत्र भूतमिति सद्भावा प्रतिनियमस्वभावात् । यतनिवृत्तो पुनर्निवृत्तो यदभ्यासवादे
मातृविवाहोचितदेशजन्मनः पिण्डखर्जूरस्य देशान्तरेषु मातृविवाहाभावेऽभाववत् एवं समर्थितं तस्य कार्यं सिध्यति । सिद्धे स्वसंभवेन
तत्संभवं साधयति, कार्यस्य कारणाव्यभिचारात् । अव्यभिचारे च स्वकारणैः सर्वकार्याणां सदृशो न्याय इति । अनुपलब्धेरपि समर्थनं,
प्रतिपत्तुरुपलब्धिलक्षणप्राप्तस्यानुपलब्धिसाधने, तादृशस्यैवानुपलब्धेरसद्व्यवहारसिद्धेः, अनुपलब्धिलक्षणप्राप्तस्य प्रतिपत्तुः प्रत्यक्षोप

लब्धिनिवृत्त्यप्रमाणतासिद्धेः । तथोपलब्धिलक्षणप्राप्तिः स्वभावविशेषः कारणान्तरसाकल्यं च स्वभावविशेषः । यत्र त्रिविधेन विप्रकर्षेण विप्रकृष्टे यत्नात्मरूपप्रतिभासविवेकेन प्रतिपत्तृप्रत्यक्षप्रतिभासिरूपं च ताद्रूप्यं सत्स्वन्येषूपलम्भकारणेषु तथानुपलम्भोऽसद्व्यवहारविषयः । ततोऽन्यथा सति लिङ्गे संशयः । अत्रापि सर्वमेवंविधमसद्व्यवहारविषयः । इति व्याप्तिः, कस्यचिदसतोऽभ्युपगमेऽन्यस्य तल्लक्षणाविशेषात् । न ह्येवंविधस्यासत्त्वानभ्युपगमेऽन्यत्र तस्य योगः । न ह्येवंविधस्य सतः सत्स्वन्येषूपलम्भकारणेष्वनुपलब्धिः । अनुपलभ्यमानं सौरभं नास्तीत्येतावन्मात्रनिमित्तोऽयमसद्व्यवहारः, अन्यस्य तन्निमित्तस्याभावादिति । तदेवं त्रिविधस्य हेतोः समर्थनं न रूपान्तरं, विपक्षव्यावृत्तिरूपत्वात्, तृतीयस्यैव रूपस्यासपक्षासत्त्वलक्षणस्यैव प्रतिपादनात् । तद्वचने साधनाङ्गस्य त्रिरूपलिङ्गस्य वचनात् साधनाङ्गवचनं निग्रहाधिकरणं प्रसज्येत । निगमनादेस्तु हेतुरूपातिरिक्तत्वादभिधानमनर्थकं, त्रिरूपहेतुना साध्यार्थप्रतिपत्तेर्विहितत्वात् । ततो निगमनादिभ्योऽविशेषे एव समर्थनमिति । तदेतदपि स्वदर्शनानुरागमात्रं सौगतस्य निगमनादेरपि साधनावयवत्वात्, प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति परैरभिधानात्, निगमनस्योपनयस्य वा तदवचने न्यूनाख्यस्य निग्रहस्थानस्य प्रसक्तेः, हीनमन्यतमेनापि न्यूनमिति वचनात् । यदि पुनः साध्यावयवत्वेऽपि निगमनादेर्वचनमयुक्तं, हेत्वादिनैवार्थप्रत्यायनादिति मतं तदा समर्थनस्य हेतुरूपत्वेऽपि निर्दोषहेतुप्रयोगादेव साध्यप्रसिद्धेस्तदभिधानमनर्थकं कथं न भवेत् ? यतः समर्थनं निगमनादीनतिशेते । हेतोर्विपक्षव्यावृत्तिसाधनलक्षणस्य समर्थनस्यावचने रूपान्तरत्वेऽपि गमकत्वासम्भवान्निगमनाद्यवचनेऽपि गमकत्वोपपत्तेः समर्थनं निगमनादीनतिशेते इति चेत् एवं तर्हि, पक्षधर्मत्वसपक्षसत्त्वयोर्हेतुरूपत्वाभावापत्तेः, अन्यथानुपपन्नत्वस्यैव तथाहेतुलक्षणत्वसिद्धेः तस्यैव समर्थनरूपत्वात्, तदभावे एव हेतोः प्रयोजकत्वाभावात्, पक्षधर्मत्वादिसद्भावेऽपि तादृशोऽसाधनाङ्गवचनस्य निग्रहस्थान-

त्वमसत्के। प्रतिपाद्यानुरोधतः पक्षधर्मत्वादिवचनान्न निग्रहप्राप्तिरिति चेत्, तथा निगमनाभिवचनमात्रेऽपि सा मा भूत्, सर्वथातिशयास स्यात्। यदि पुनरयं नियमः प्रतिपाद्यानुरोधतोऽप्यतिरिक्तवचनमसाधनाङ्गवचनं निग्रहस्थानमिति तदा शब्दमात्रेण नश्वरत्वसिद्धावुत्पत्तिमत्त्वकृतकत्वादिवचनमतिरिक्तविशेषणोपादानात् कृतकत्वप्रयत्नानन्तरीयकत्वादिषु च क्रमस्याविरेकादसाधनाङ्गवचनं पराजयाय प्रभवेत्। कश्चित्पक्षधर्मत्वप्रदर्शनं, सर्वं क्षणं इत्यविगानात्। यस्य निरुपाधि सत्त्वं प्रसिद्धं तं प्रति शुद्धः स्वभावहेतुः प्रयुज्यते, नश्वरः शब्दः सत्त्वादिति। यस्य स्वभावान्तरभूतविशेषणं सत्त्वं प्रसिद्धं तं प्रति सोऽनर्थान्तरभूतविशेषण एवोत्पत्तिमत्त्वादिति। यस्य पुनरर्थान्तरभूतविशेषणं सत्त्वं संप्रसिद्धं तं प्रत्यर्थान्तरभूतविशेषण एव कृतकत्वादिति, "अपेक्षितपरव्यापारो हि भावः कृतक" इति वचनात्। तथा कृतकत्वात्प्रयत्नानन्तरीयकत्वादित्यादिषु च स्वाभिकस्य क्रमस्यावश्याभिधानमपि तादृक्सम्प्रसिद्ध्यनुसारिणं प्रति नातिरिक्तमुच्यते, अन्यथाप्रयोगे तदपरितोषात्। तथा च यत्सत्तत्सर्वं क्षणिकं यथा घट इतीयता क्षणेऽप्यविगानेन सत्त्वप्रतिपत्तावपि सर्वं क्षणं इति पक्षधर्मप्रदर्शनं नातिरिक्तवचनं, तदन्तरेण तत्प्रतिपत्तुमशक्तं प्रति तदाश्रयणाद्गुणं प्रति तद्वचनात्, "विदुषां वाच्यो हेतुरेव हि केवलः" इति वचनान्न पराजयाय कस्यचित्प्रभवेत्, इति यदन्यः सौगताः प्रतिपाद्यानुरोधेन साधर्म्यवचनेऽपि वैधर्म्यवचनं तद्वचनेऽपि च साधर्म्यवचनं पक्षादिवचनं वा नेच्छन्तीति किमपि महाद्भुतम्। तथा तद्विष्ठौ वा तद्वचनं निग्रहाधिकरणमित्ययुक्तमेव व्यवतिष्ठते। किञ्च कश्चित्पक्षधर्मत्वप्रदर्शनं सर्वं क्षणं इत्यविगानात्, त्रिलक्षणवचनसमर्थनं च असाधनाङ्गवचनमपजयप्राप्तिरिति व्याहतं, सर्वं क्षणं इति वचनमन्तरेणापि क्षणे सत्त्वप्रतीतेस्तस्य निग्रहस्थानत्वप्रसङ्गात्। प्रतिज्ञावचनस्यासाधनाङ्गत्वादस्थानिग्रहस्थानत्वे वा संगरवचनादेरप्यपजयप्राप्तिविरोधात्पक्षधर्मप्रदर्शनमसाधनाङ्गवचनादपजयप्राप्त्या व्याहतमेव। त्रिलक्षणवचनस

भेदेनैकस्यां व्यक्तौ किं स्यात्। फलितमाह, न स्यात् तस्यां मतावपि (११७-१-१२) किं पुनरर्थ इत्यपेरर्थः। यदीदं नानाकारभ्रमजनकत्वं स्वयमनाद्यविद्योपकल्पितेभ्योऽर्थेभ्यो रोचते तत्र के वयं विचारका भवामः। न केवलाविद्याधि- उपसनिष्ठो विचारस्यावसरत्वादिति भावः। 'किञ्चेति' तस्यां चित्रमतावपि (११७-१-१३) नु इति वितर्के एकधा किं स्यात्, फलितमाह, न स्यादनेकाकारविरोधादिति भावः। यदीदमनेकाकारविरुद्धैकत्वभ्रमजनकत्वं चित्रार्थे बुद्धये रोचते तत्र के वयं विचारका न केवलं पर्यायार्थविरोधिद्रव्यार्थविशेषैकान्तस्य संवृत्युपकल्पितस्य विचारापरावर्तनीयत्वादिति भावः। कथंचिदेकवेदनेति (११७-२ ३) नानेकत्वविषयकापेक्षाबुद्ध्यैवानेकत्वस्योत्पत्तेरभिव्यक्तेर्वा एतत्पक्षद्वयविचारोऽस्मत्कृ-तनयामृततरङ्गिणीतोऽवसेयः। 'तथा सतीति' (११७-२ ५) अनेकत्वप्रयोजकापेक्षाबुद्धिहेतुत्वे नैकत्वसाधने संविदाकारवत् पीताद्याकारे प्रत्येकमेकत्वसिद्धौ तत्समूहाश्रयानेकचैतन्यदृष्टान्तेनैकत्राप्यनेकाकारासिद्धेरित्यर्थः॥ अन्तरिति (११७-२ ६) पश्यन्- समन्वय अन्तस्तत्त्वस्येत्यर्थः। नन्वनेकचैतन्यव्याप्यानेकाकारस्य चित्रज्ञानस्य दृष्टान्तत्वोक्तिरसङ्गतानेकाकाराणां स्वाश्रयाश्रित स्वरूपसंकलना(ज्ञा)या एव चित्रत्वव्यवहारप्रयोजकत्वादिति चेत्, न, अत्र व्यवहारस्यासाध्यत्वात्कथञ्चिदेकानेकात्मकत्वस्यैव तन्मात्, हेतोश्च तत्र तथाबुद्धेरेवोपन्यासात्, सा च ययापेक्षया तया साध्यमपीत्यदोषात्, नानाश्रयेषु नानाकारकृतमिश्रत्व व्यवहारोऽपि सामान्यविषयत्वोपपत्तेः एवैकमेव पृथिव्यादौ नानारूपवत्त्वस्य धान्यराशौ च नानाधान्यत्वस्य व्यवहारो नानु पचय इति दिग्। चित्राद्वैतवादी संवेदनाद्वैतवादिनं प्रत्याह–'स्यान्मतमिति' (११७-२-७) 'तदानेकेनेति' (११७-२-९) पक्षे द्वयवचनादेवानेकत्वस्यावीपत्वस्य च सिद्धेरित्यर्थः। चित्रज्ञानप्रतिबन्ध्येवैतत् समाधत्ते, तदेतदित्यादि (११७-२ १०) मय

च्छिन्नपीतापानेकाकारस्वभावमिवानवच्छिन्नसुखाकारस्वभावं ज्ञानमनुभूयमानं तयोराकारयो व्याप्यवृत्तित्वमव्याप्यवृत्तित्वं च गृहीत केनापि निषेद्धुं अशक्यमिति भावः । अस्वसंवेद्यस्याप्रतीतेरिति (११८-१-१) सुखादीनामिति सम्बन्धः । 'चैतन्यविशेषेणेति' (११८-१-२) अनुभवेनेत्यर्थः । तस्योत्पत्तिमत्त्वाच्चैतन्यलक्षणत्वाच्च, चैतन्यजीवद्रव्याणामिवेत्या दिति (११८-१-३) चैतन्याभिन्नजीवद्रव्याभिन्नत्वेनार्पणादित्यर्थः । न चैवं ज्ञानमात्मैवात्मा तु ज्ञानद्वारा ज्ञानमन्यद्वारा त्वन्य दिति वचनात्, ज्ञानमिव सुखादिकमपि जीवद्रव्याभिन्नत्वेनार्पणात् ज्ञानमप्यज्ञानं स्यादिति शङ्कनीयम् । ज्ञानभिन्नत्वेनार्पितस्य परम्परयापि ज्ञानेऽभेदार्पणानौचित्यात् परमभावग्राहकनयेन ज्ञानाभिन्नत्वस्यैवात्मनि प्रसिद्धेश्च, अतद्रूपाणा-(११८-१-९) मित्याद्यभिधानं सुखादीनां विज्ञानाभिन्नहेतुकत्वं यदुच्यते सौगतेन तत्किमुपादानापेक्षयोत सहकार्यपेक्षयेति विकल्पद्वय मनसि कृत्येति मन्तव्यम् । एवं सर्वथा कथञ्चित्पक्षाभ्यां यद्यपि अन्यथापि तस्यैवेदं विवरणमिति न पौनरुक्त्यम्, व्यभिचारादिति (११८-१-१२) द्रव्येन्द्रियानिन्द्रियोपादेयपरिणाम एवेत्यर्थः । प्रत्येतव्या इति (११८-१-१४) नैयायिकादय इति शेषः । अनुमानं च तेषां सुखादयोऽचेतना ज्ञानभिन्नत्वात् घटवदिति द्रष्टव्यम् । अत्राचेतनत्वं यदि ज्ञानभिन्नत्वं तदा हेतुसाध्ययोर विशेषः । यदि च चैतन्यात् प्रविभक्तप्रदेशस्वरूपं तदा कालात्ययापदिष्टो हेतुरिति सुखस्य ज्ञानादन्यस्वरूपो भेदः प्रविभक्तप्रदेश स्वरूपभेदाभावमपेक्ष्यैकान्त एव श्रेयान् । अथ सुखस्य ज्ञानविशेषत्व एव चन्दनादिविषयकत्वं युक्तं सुखोत्पत्त्यनन्तरं चन्द नादिज्ञानं कल्पयित्वा तदुपनीतमानात्मकसुखानुभवाभ्युपगमस्य मानससामग्रीविच्छेदेन निर्युक्तिकत्वात् । न च चन्दनसुख मनुभवामीत्यत्र चन्दनादिजन्यतावच्छेदको जातिविशेष एव सुखस्योपरि भासते । न तु चन्दनमिति वाच्यम् । तस्य चक्षुरा-

दिजन्यतावच्छेदकतया तदुभयजन्ये शाब्दपादुभयजन्यतावच्छेदकजात्यन्तराभ्युपगमे च तदवच्छिन्नोत्पत्तिकाले प्रत्येकजन्यकार्य प्रसङ्गात् तत्कार्ये तदितरसत्त्वाभिमानस्य प्रतिबन्धकत्वादिकल्पने च महागौरवादिति चेत्, न, एवं सति सुखस्य सविषयकत्वसिद्धा वपीच्छाद्वेषयोरिव ज्ञानाभिन्नत्वे मानाभावात्, न च सुखस्य सविषयकत्वे विषयता द्विविधा प्रतिपत्त्यनुबन्धिनी व्यापारानुबन्धिनी च, प्रतिपत्तित्वनिरूपकत्वं प्रतिपत्त्यनुबन्धिनीत्वम्, स्वजन्यप्रवृत्तिनिरूपितत्वं व्यापारानुबन्धिनीत्वम्, आद्या ज्ञाने द्वितीया च सुखादाविति विभागव्याघातप्रसङ्ग इति वाच्यम्, प्राचीनैरेवेत्थं निर्युक्तिकविभागस्याभ्युपगमान्नवीनैरिच्छाद्वेषादेरपि सविष-यकत्वस्वीकारेण तथानभ्युपगमात्, युक्तं चैतत् विशिष्टसुखे विषयितया विशेषणवत्त्वेन विशिष्टवैशिष्ट्यसुखे च विशेषणता वच्छेदकप्रमाप्रकारकत्वे सति प्रकारितया विशेषणतावच्छेदकवत्त्वेन हेतुत्वौचित्यात्, न चैवं संशयेऽप्यनुभवसंस्कारादि शिष्टवैशिष्ट्यसुखापत्तिः संस्कारजन्यतत्तद्विशिष्टवैशिष्ट्यप्रत्यक्षे उद्बोधकस्य हेतुत्वात्, न चैवमपि सामान्यकार्यापत्तिः संस्का रासन्यत्र तद्विशिष्टवैशिष्ट्यबोधेऽपि तत्तद्विशेषणज्ञानादीनां विशिष्यहेतुत्वात्, न चैवं सामान्यहेतुत्वं विफलम्, यत्रात्मनि शरीरे वा तादृशानुभवसंस्कारस्तत्र तत्साफल्यात्, एतेन दण्डो रक्तो नवेति संशयाद्दण्डो रक्तो भवत्वितीच्छास्वीकारे रक्तदण्ड वान् चैत्र इत्यादेरापत्तिरित्यप्यपास्तम् । स्वविशिष्टविशिष्यकारणतायाः कल्पनात् सामान्यहेतुतायाश्चोक्तरीत्यैव साफल्यात् एवं च चन्दनादिविषयकसुखादेव तद्ज्ञाने चन्दनादिभानं सुघटम्, वैषयिकं च सुखं विषयावच्छिन्नाह्लादनत्वाख्यविषयताकं विषयातीतं च निरवच्छिन्नाह्लादनत्वाख्यविषयताकमित्यनयोः परिमितापरिमितत्वाभ्यां भेदः । अथ सुखस्य भिन्न-ज्ञानग्राह्यत्वकल्पने गौरवात् स्वप्रकाशत्वमेव युक्तम्, तथा च ज्ञानत्वमेवापन्नमिति चेत्, न । स्वप्रकाशत्वं विनापि तस्य

वोभयात्मकत्वयोभयदोषापहारितया वा भावनीयम् । तत्समत्वसमस्तकुतनपररूपे, अध्यारोप्यमाणस्येति) (११०–२–१) न यप्रसिद्धस्याध्यारोपोऽप्ययुक्तः कश्चित् प्रसिद्धस्यैव क्वचिदारोपादिति चेत्, न । सर्वथात्वेनैकान्तस्य प्रसिद्धस्यैवारोपात्तया निषेधस्य युक्तिसिद्धत्वात्, व्युत्पादयिष्यते च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकादिरभाव उपरिष्टादिति मा त्वरिष्ठाः, अति रिक्ताभावमनङ्गीकृत्याह, अथवेति (२) प्रयासमन्तरेणेति (३) अनेकान्तविधिनैव प्रत्यक्षसिद्धेन सर्वथैकान्तनिषेधव्यवहार सिद्धेर्नाप्रसिद्धनिषेधोपपादनार्थं कश्चिदस्माकं प्रयास इति भावः । एवं चोक्तविधिनिषेधव्यवहारजनकत्वेन वस्तुन एव भावाभावो भयरूपत्वादभावव्यवहारस्यैव सप्रतियोगिकत्वादभावप्रतियोगित्वस्याप्रसिद्धस्यत्वे वक्तुमशक्यत्वेऽपि न कोऽपि दोष इति मन्त व्यम् । ननु प्रत्यक्षादनुमानादेर्बलवत्त्वात्तदपेक्षा भविष्यतीत्यत आह भाष्यकृत्, 'नहीति' (१११–२–३) इष्टमनुमानादिम माणम्, इष्टात् प्रत्यक्षात्, ज्येष्ठमुपजीव्यत्वेनोत्तमं, गरिष्ठं च समारोपविक्षेपव्यवच्छेदकत्वेन बलवत्, तद्भावे (४) प्रत्यक्षा भावे, प्रमाणान्तरस्यानुमानादेरप्रवृत्तेरभावात्, समारोपविच्छेदस्य च विशेषाद्पुनरुत्थानरूपविशेषदर्शनात् । कश्चिद- नुमानाद्युत्तरकालमिति (१११–२–५) पर्वतो वह्निमानित्यनुमित्यनन्तरं पर्वतवह्न्योश्चक्षुःसन्निधाने तथा प्रत्यक्षस्याप्य नुपेक्षत्वं च विशेषप्रमानतयोक्तानुमितेरप्रयोगादिति भावः । 'प्रत्यक्षस्येत्यादि' (८) तथा चानुमानत्वाद्यवच्छेदेन प्रत्यक्षोप जीवकत्वादनुमानादेः सकाशात् प्रत्यक्षस्य ज्येष्ठत्वम्, प्रत्यक्षत्वावच्छेदेन चानुमानाद्यनुपजीवकत्वादनुमानादेः प्रत्यक्षात् कनि ष्ठत्वमिति भावः । नन्वनुमानत्वाद्यवच्छेदेनापि न प्रत्यक्षोपजीवकत्वमस्ति स्मरणानुमानादिना व्याप्तिस्मृतिलिङ्गज्ञानाद्यौ मत्यक्षव्यापारादर्शनादिति चेत्, न, । तत्रापि परम्परयाऽनुभवपदज्ञानाद्यपेक्षायां प्रत्यक्षानुसरणावश्यकत्वात्, ज्ञानकारणकप्रत्य

एकस्येति (१२०—१–१२) तथा च साध्यविपर्ययविशिष्टज्ञानाज्ञानाभ्यामेव जयपराजयसिद्धेः किं साधनसामर्थ्यज्ञानाज्ञानाभ्याम्, न च नयं समीचीनसाधनज्ञानवानयं चासम्यग्ज्ञानवानित्येतावतस्तयोर्दूषणोपपत्त्येन भङ्गप्राश्निकया जयपराजयव्यवस्थितिर्न भवतीति, न च तदोप-न्यस्तं कथिचित् कथिदेतज्जयपराजयप्रयोजकम्, अननुगतसाधकत्वात्, पक्षसिद्ध्यसिद्ध्योरनुगतयोरेव तदौचित्यादिति भावः। तदोप-मात्रे ज्ञानसिद्धेरिति (१४) जयः पराजयो वा स्यादित्यनेन योगः, वादिनः पक्षसिद्ध्या जयो वचनाधिक्यप्रयुक्तसाध नसामर्थ्याज्ञानात्पराजयः, प्रतिवादिनश्च दोषज्ञानाज्जयो गुणाज्ञानाच्च पराजयः स्यादित्यर्थः । न जयः पराजयो वा स्यादिति (१२०–२–१) परस्परविप्रतिषेधादित्यर्थः । समयबन्धाविघटकत्वादधिकं पराजयाधिकरणमित्याशङ्कते स्यान्मत मित्यादिना (२), समयबन्धेऽपि साधनतद्रूपाभिधाने एवोपक्रान्ते न स्वाधिकानधिकोद्भावने इति नायं पन्थाः प्रामाणिक इत्याशयवान् समाधत्ते तदप्यपेशलमित्यादिना (३), साधयेदिति साधनस्वरूपाज्ञानमिति (४) शेषः । तद्वचन (५) इति, वचनाधिक्यं वचनेयत्ताभ्याप्यमिति तज्ज्ञानात्सेव सिद्धस्तु न तु साधनस्वरूपाज्ञानं तस्य तद्व्याप्यत्वादिति भावः । सिद्धिमित्यनन्तरं यतस्त्वयाभ्युपगतं तत इति शेषः। अनर्थकस्यापीति (१०) अनिष्टसाधकत्वेन द्वेषविषयस्यापीत्यर्थः, वचनाधिक्यमात्रमिति (१०) मात्रपदेनोद्भावननिरासः, क्लिश्यत इति (१०) तथा च द्विरोद्भावनेन पराजयः साध्य त इत्यर्थः ।अपोपोद्भावनमिति (११) एकसाधनस्य साधनान्तरापेक्षत्वादिति भावः। भवान् सौगतः, पक्षधर्मेय विति (१४) भावप्रधाननिर्देशात्पक्षधर्मत्ववदित्यर्थः। तदुभयस्यापीति (१४), सपक्षसत्त्वविपक्षव्यावृत्तिरूपसाधर्म्यवैधर्म्योभ यस्यापीत्यर्थः। त्रिरूपत्वप्रतिज्ञानादिति (१४) अबाधितविषयत्वासत्प्रतिपक्षत्वयोः प्रामाण्यमात्रसाधारणत्वेन हेतुरूपत्वा

नभ्युपगमादित्यर्थः । 'सुस्थिताविति' (१२१-१-२) वसुमीहिया सुस्थितायामित्यर्थः । प्रसक्तेरिति (३) वाद्युक्तहेतो
विरुद्धत्वाद्युद्भावन एव कृतार्थताभिमाने सतो जयः स्वपरिगृहीतपक्षासिद्धौ च पराजय इत्येवमुभयं स्यादित्यर्थः । प्रतिपत्ति-
विक्षेपप्रयोजनभेदात् पक्षप्रतिपक्षपरिग्रहवैयर्थ्यं व्यतिरेकेण प्ररूपयितुमाह 'नहीत्यादि(३)' तद्विघातहेतुत्वात् (४) स्वपक्ष-
सिद्धिप्रतिपक्षासिद्ध्यनुकूलत्वात् 'प्रतिपाद्येत्यादि' (४) व्याप्त्यभिधानमात्राद् यस्य न साध्यसिद्धिस्तं प्रति प्रतिज्ञादिवचन
मप्युद्दिष्टं पुरुषविशेषं प्रत्यसिद्धस्यैव ततः सिद्धेरित्थमेव प्रतिपाद्यवशादुपरम्य प्रतिपत्तिविक्षेपसिद्धये पक्षप्रतिपक्षपरिग्रहः कथाया
मङ्ग इति भावः । अत एव पञ्चावयवप्रयोगेऽपि यस्य न कष्टक्लेशार्थं विना साध्यप्रतिपत्तिस्तं प्रति दशावयवप्रयोगोऽपि शीर्ण
नैयायिकैः स्वीक्रियत इति मन्तव्यम् । तत्रापि (११) वादेऽपि, तेषां वादकराणाम्, तादृशत्वात् प्रतिपाद्यविबोधनार्थं
व्यापृतत्वात्, तत्र (१२) शास्त्रादौ, जिगीषवो न हि न प्रतिपाद्या (१२) न बोधनीयाः किन्तु प्रतिपाद्या एव, शास्त्रारूप-
व्याख्यानभेदे तत्र शिष्याणां विजिगीषुताया अपि सम्भवात्, यथा यथा वार्ते वादेन वर्ते तथा तथा प्रथमार्थं तदुभयं वा क्रमे
इत्यादेः केषाञ्चिदपेक्षया सम्बन्धे प्रसिद्धत्वादिति भावः । जिगीषुमात्रप्रतिपाद्यत्वे प्रतिज्ञाया अप्रयोगः स्यादित्यत्राह, 'शास्त्रा
दावित्यादि' (१३) न स्यादिति (१२१-२-१) इत्यनन्तरं विभाव्यते तदेतिश्लेषः, कथमिवेति (३) कियतो, इत्यस्य
प्रयोगः यस्माद्धरणोद्धुर्यथा "आवर्जिता किञ्चिदिव स्तनाभ्याम्" इत्यत्र, कथं स यामतिशेते (२), न युक्तमेवेत्यर्थः ।
तावतार्थप्रतिपत्तावित्यादि(४), यथाऽस्माकं प्रतिज्ञानिगमनादिवचनमभिधानवचनस्याभिप्रायस्थाने स्वयं प्रतिपाद्यते तथा
तथापि हेतोः समर्थनमभिधानवचनस्याभिप्रायस्थानमायाति, साध्यसिद्धेर्विपक्षव्यावृत्तिलक्षणहेतोरेव भावादित्यर्थः । गम्यमान

इति (६) हेत्व नभिधेन तात्पर्यविषयो गम्यमानः प्रतिज्ञार्थ एव हेत्वर्थेनान्वयीमविष्यतीति किं प्रतिज्ञावचनोपन्यासेनेत्यर्थः। तयास धायचन इति (७) शाब्दी हीविन्यायादित्यर्थः। 'समर्थनं नामेत्यादि (७)' ततो निगममादीनतिरिक्त एव समर्थनमिति दूरेणान्वयः। 'साध्येनेत्यादि(७)' साध्येन सह व्याप्तिमत्तया प्रदर्शितस्य हेतोः, धर्मिणी भावसाधन (८) धर्मिणि साधितस्य हेतोः साध्येन सह व्याप्तिमत्ताप्रदर्शनमित्यत्र विना पौर्वापर्यं न कश्चिद्विशेषः, सः (९) क्रमयौगपद्याभावः, तावता (१२२-१-२) विपर्यये बाधकप्रमाणोपदर्शनेन, साधनधर्ममात्रान्वयः (२) भावस्साधनाश्रयाभिमतत्वं, अदर्शनमप्रमाणम् (३), अदर्शनमात्र क्षणिकत्वाभावस्य न साधकमित्यर्थः। अस्यैवायोगस्यैव, तेनेति (७) येन कारणेन, अर्थस्य क्रमयौगपद्यलक्षणव्यापकधर्मानुपलम्भो नित्ये सत्त्वं बाधत इति सत्त्वाभावेन क्रमयौगपद्याभावस्य व्याप्तिः सिद्ध्यति बाधकप्रमाणेन च स्यात्सुपपन्नबाधाविना न विपर्ययपक्षइति नानुमानान्तरापेक्षयानवस्थेति भावः। प्रमाणाभ्यां (९) प्रत्यक्षानुपलम्भाभ्याम्, तद्धेतुत्विति (९)। ननु प्रकृतहेतुत्वग्रहे स्वहेतुत्वग्राहकापेक्षायामात्माश्रयोऽन्यहेतुत्वग्राहकापेक्षायामन्योन्याश्रयादिकमिति। तद्धेतुत्विस्युक्तमभिधानमिति चेत्, न। समूहान्वयव्यतिरेकाभ्यां समूहे कारणत्वग्रहे तद्विरहवीतत्कार्यकारणताकसमूहसत्त्वे यद्व्यतिरेकेऽवश्यं कार्यव्यतिरेकस्तादृक्समूहसत्त्वे तत्सत्त्वे चावश्यं तत्कार्यसत्त्वमित्यन्वयव्यतिरेकयोर्ग्रहस्य विधिव्य तत्कारणत्वग्राहकत्वे दोषाभावात्। यद्वा, तत्सम्बाप्याभिमताः यावतीषु व्यक्तिषु सतीषु सम्बाधारयदवच्छिन्नाधिकरणक्षणोत्तरक्षणे यदवच्छिन्नाधिकरणत्व तावतीषु व्यक्तिषु सतीष्वेव सम्बाधारयदवच्छिन्नानधिकरणक्षणोत्तरक्षणे यदवच्छिन्नानधिकरणत्वं तदवच्छिन्नं प्रति तदेव जनकत्वम्, आकाशाभावकाले रासभादेर्घटादावुभयसत्त्वात् सतीष्वेवेत्य-

न्वम्, इत्थं च यावतां सत्त्वे रासभाधिकरणक्षणोपादाने पटसत्त्वं तावतां सत्त्वे तं विना घटासत्त्वं नास्तीति नातिप्रसङ्गः, घट समप्रसक्तीनयावद्व्यक्तिनिविष्टव्यक्त्यादिसत्त्वकालेऽसत्त्वस्यासम्भवात् विभावयिष्यन्तम्, यत्तु मङ्गलाभावरूपविघ्नहेतुमतिप्रसक्त्य- तद्व्याप्येतरयावद्विघ्नहेतुसमवधानकाले मङ्गलसत्त्वस्यासम्भवात् स्वाभावविभावयिष्यत्यपि विशेषणीयमिति, तन्न, स्वस्वव्या- प्येतरयावद्व्यक्तिसत्त्वे मङ्गलसत्त्वे विघ्नाभावभावस्यावश्यम्भावे मङ्गलसत्त्वे विघ्नाभावभावस्य सत्त्वेन तद्विशेषणानौचित्यात्, न च तत्र स्वस्वव्याप्येतरयावद्विघ्नहेतुत्वेन निवेश इति, तन्न, यावतां सत्त्वे दण्डसत्त्वे पटसत्त्वं तावतां सत्त्वे दण्डासत्त्वे पटासत्त्व स्यासम्भवात्, घटप्रागभावोऽस्यधिकानामुदासीनानन्तसंयोगविभागतदवच्छेदानामन्यतमाभावात्, यावत्पदस्येच्छोपनीततया तत्तत्त्वे रासभादिप्रसङ्गात्, चक्रादियावद्वस्तुसत्त्वे रासभसत्त्वे दण्डसमवधाने घटसत्त्वात्तदसमवधाने घटासत्त्वात्, तस्माद् यावद्वस्तुसत्त्वे तद्व्यापारवत्त्वस्याप्रामाण्येऽप्यावश्यकं कार्यं तावद्वस्तुसत्त्वे तद्व्यापारवद्व्यतिरेके यावच्च कार्यव्यतिरेकस्त- स्य ज्ञापनमित्येवं योग्यतावच्छेदकव्यापार्याः कारणताया लक्षणं वाच्यम्, भवति हि चक्रादिसमूहसत्त्वे तद्व्यापारवद्दण्डसत्त्वेऽप्रामाण्ये पटत्वं तद्व्यापारवद्व्यतिरेके घटव्यतिरेकस्तथा मङ्गलाभावेतरविघ्नहेतुसमूहसत्त्वे मङ्गलसत्त्वे विघ्नाभावभावस्वभावे तदभावः। तस्यापरित्यक्तसमयोग्यसमवायादिसमूहसत्त्वे तद्व्यापारप्रागभावसत्त्वेऽप्रामाण्ये दुःखप्रागभावसत्त्वं तद्व्यापारप्रागभावाभावे दुःख- प्रागभावाभाव इति, इत्थं च प्रकृतान्वयव्यतिरेकज्ञानानन्तरं प्रत्येकमन्वयव्यतिरेकज्ञानस्य प्रत्येककारणताग्राहकत्वं नाप्रामाणिक- मिति निर्भरम्। यत्तत्पूर्वोक्तौ (११) मङ्गलकारणनिरूपणे, घटस्यच्छासंवादः साहचर्यमात्रं न तु नियमः, कारणतालक्षणे च नियमः प्रविष्ट इति नातिप्रसङ्ग इति भावः। विविधेनेति (१२९–२–१) वेदबोधकसमाप्यमेदविवेकेत्यर्थः। वमात्स्मरूपमति वास-

विवेकेनेति(१२९-२ २)नास्त्यात्मरूपं प्रतिभासो यत्र तद्विवेकेनेति व्युत्पत्त्याऽयोग्यभेदेनेत्यर्थः। तेन प्रतियोगिप्रतियोगिव्याप्ये तत्पासत्त्वविरोध्युपलम्भकसमवधानरूपकारणान्तरसाकल्यरूपायां योग्यतायां प्राचीनाभिमतायामपरितुष्यन्नवीनसौगतः प्रतियोगिनः स्वरूपयोग्यतामविशेषयन् योग्यताया अननुगतत्वमाह, चकारस्यापि व्यवस्थार्थत्वसम्भवात्, तथा चात्र विचारयन्ति नैयायिकाः। केयं योग्यानुपलब्धिरिन्द्रियसम्बद्धविशेषणताया अभावग्रहे सहकारिणी, न तावत् योग्यस्य प्रतियोगिनोऽनुपलब्धिर्जलपरमाणौ पृथिवीत्वाभावग्रहापत्तेः स्तम्भे पिशाचभेदग्रहानापत्तेश्च, नापि योग्येऽधिकरणे प्रतियोगिनोऽनुपलब्धिः सा, भूतले पिशाचात्यन्ताभावग्रहापत्तेः, परमाणौ महत्त्वाभावग्रहानापत्तेश्च, न चात्यन्ताभावग्रहे योग्यप्रतियोग्यनुपलब्धिरन्योन्याभावग्रहे च योग्येऽधिकरणे प्रतियोगितादात्म्यानुपलब्धिः सहकारिणीत्यपि साम्प्रतम्, जलपरमाणौ पृथिवीत्वात्यन्ताभावग्रहापत्तेः, परमाणौ महत्त्वभेदग्रहस्य वायावुद्भूतरूपभेदग्रहस्यानापत्तेश्चेष्टापत्तेश्चानुभवविरोधेन कर्तुमशक्यत्वादिति चेत्, योग्यसहकारिसम्पन्नानुपलब्धिः कारणम्, अत एवान्धकारे न घटाभावग्रहश्चक्षुषः तत्रालोकाधिकरणसन्निकर्षस्य हेतुत्वात् न वा जलपरमाणौ पृथिवीत्वाभावग्रहः योग्यसन्निकर्षाभावात्, इन्द्रियसन्निकृष्टमहत्त्वोद्भूतरूपवद्विशेषणताया एव पृथिवीत्वाभावग्रहे योग्यसन्निकर्षत्वात्, उद्भूतरूपाभावग्रहे त्विन्द्रियसन्निकृष्टमहत्त्ववद्विशेषणता योग्यः सन्निकर्षोऽतो मनसि न तद्ग्रहो भवति, भवति च महति वायौ, एवमन्यत्रापि सन्निकर्षयोग्यता कार्यबलादुन्नेया, पिशाचात्यन्ताभावस्त्वयोग्यत्वादेव न गृह्यते, का पुनरत्यन्ताभावस्य योग्यता योग्यमात्रप्रतियोगिके योग्यधर्मावच्छिन्नप्रतियोगिताकत्वम्, एष च घटत्वाभावो न घटत्वत्वेन न वा जातित्वादीनां प्रत्यक्षो घटत्वत्वजातित्वादेरतीन्द्रियघटितत्वादिति सर्वेषामप्रत्यक्ष इति दीधितिकृतः। तच्चासक्तिरवेन घटत्वाद

तस्यापि स्वरूपेणेति (२) स्वरूपेण सत्त्वे पररूपेण चाऽसत्त्वेऽनुभव एव साक्षीति भावः । न च प्रसिद्धेन पररूपेणासत्त्वमनु
भूयतां न तु खरशृङ्गादिवदप्रसिद्धेनेति न वस्तुकापेक्षकान्तस्य स्वरूपेण सत्त्वे पररूपेणानेकान्तेनासत्त्वानुरोधादनेकान्ताभ्युपग
मापत्तिरिति वक्तव्यम् । स्थिरपक्षे स पर्यायमित्यादौ क्षणिकपक्षेऽपि चित्रज्ञानादौ भेदाभेदाद्यनेकान्तस्यानुभवसिद्धत्वेनासत्त्वा
रोपविषयतयाऽपि तदुर्निरासत्वस्य तात्पर्यात्, एतेनासत्त्वस्यापि सिद्धेनानेकान्तरूपेण व्यधिकरणधर्मावच्छिन्नप्रतियोगिकत्वादिना
ऽभ्युपगमेऽपि न वस्तुसिद्धिरित्यपास्तम् । अनाश्रय (५) एकान्ताश्रयनिरासात्, मत (५) एकान्तनिरासात्, अनुष्ठान तपश्च
रणादि, एकान्तवादिनामिति शेषः । अभिमतव्याघातकृत् स्वर्गापवर्गफलनिराकरिष्णुः स्यात्, सर्वैकान्ते दोषं दर्शयन्सदे
कान्तस्य व्याप्यतामाशङ्कते पूर्वपक्षी ननु चेत्यादिना(६), क्रमेण इत्यादि पञ्चम्यन्तत्रयस्य मा भूत् (७) इत्यनेनान्वयः, सर्वथा
सतस्तत्त्वघटनादिति (७) हेतुः । तत्त्वघटनात्(जन्माघटनात्), सर्वथासत्त्वं वाक्यद्वयासाद्युत्पन्नमाचख्याप्यसत्त्वेन घटम्, ततस्तथात्वे
उत्पत्तिर्न घटत इति भावः, कर्मविपाकात् (७) अपथ्याभिमतविहितपरमादिकर्मणः, तत्त्वज्ञानादेः (७) आत्मसाक्षात्कारादेः,
प्रादिनामिथ्याज्ञानध्वंसपरिग्रहः, तत्त्वज्ञानमेवादिः कारणं तस्मादिति वा, वाक्यरो मतद्वयाभिप्रायस्पर्शः, केचित् खलु कर्मण एव
मुक्तिमिच्छन्ति, अपरे च तत्त्वज्ञानादेवेति । तस्य (८) कर्मविधेः, ततः (८) कायादिव्यापारादेः, भागसत (८) इति, कार
णमाक्षमाः कार्योत्पत्तिव्याप्यसाद्युत्पत्तिपक्षमम्य भवत्वावसदेकान्ते कार्यजन्माविरोधादिति भावः, सतापेक्षे—'उभयपक्ष
रणादि (८) । उभयत्र सदसत्कार्यपक्षयोः । व्यतीकप्रतिभासादुपरमनसद्भावेति, (९), असतो निरुपचित्तेन यथास्वभावं
सतोऽसत्त्वनुत्पत्त्यन्यतराभावादिति भावः । तेषां (१२) व्यतीकप्रतिभासानाम्, अभावैकान्ते (१११-१-१) माध्यमिकमते

दर्श एव योगाचारसौत्रान्तिकमतयोरप्यविशिष्टमिति माष्यकृत्—न केवलमित्यादि । न केवलं स्वभावनैरात्म्ये तस्योपप्लववादिमाध्यमिकमते (२) स्वभावशून्यस्य पदार्थमनन्तरोक्तो दोषः । किन्त्वन्तस्तत्त्ववादिनो योगाचारस्यान्तर्बहिस्तत्त्ववादिनः सौत्रान्तिकस्य च मते, निरन्वयसत्त्वेऽपि क्षणस्थितिमात्रनिरन्वयसत्त्वाङ्गीकारेऽप्ययं दोषस्तदवस्थ एवेत्यर्थः । 'कार्यकालमिति' (५) कारणस्य कार्यसद्भावव्याप्यतायाः सामग्र्याश्च स्वकाले कार्योत्पत्तिव्याप्यतायाः न्याय्यत्वात् व्यवहितोत्तरक्षणप्रवेशे गौरवादिति भावः । प्रसङ्गादिति (६) न चेष्टापत्तिः, सव्येतरगोविषाणयोः कार्यकारणभावस्य सर्वैरनभ्युपगमादिति भावः । तत्कारणत्वसाधनात्तत्र (७) कार्येऽकारणत्वसाधनात्, अन्यकार्यवदन्यकार्य इव, तस्य वा प्रकृतकार्यस्य, तत्कार्यत्वसिद्धेः प्रकृतकारणात्कार्यत्वसिद्धेः । यद्वत्( ) अन्यकार्यस्येव, तदनन्तरं सामग्रीप्रविष्टतद्व्यवहितोत्तरक्षणे, सत्त्वमपि समीचीनतया घटते, एककारणस्य कार्योत्पत्त्यव्याप्यत्वादिति द्रष्टव्यम् । अत्राप्यव्यवहितत्वमनतिप्रयोजनमित्यभिप्रेत्याह माष्यकृत्, 'कालान्तरेऽपीति' (८) त्वन्मते तदव्यवहितत्वमात्रः पूर्वभावित्वपक्षाभावित्वे तु कारणकार्यशरीरघटकेऽवयवे वाच्ये, अन्यथा समानक्षणवर्तिनां सर्वेषां कार्यकारणत्वप्रसङ्गादित्याशयवानाह, 'कालान्तरेऽपीति (८),' इदमुपलक्षणं स्वभवानस्यापि कालान्तरीयकार्यप्रधाने हेतुतायाः प्रभाकरेणाभ्युपगमादिति द्रष्टव्यम् । एवमभ्युपगमे क्षणिकत्वसाधकयुक्तिर्विरुध्यत इति दूषयमाह, समर्थे सत्य भवत इत्यादि (९), कालनियमकल्पनायामिति (११) यत्काले यज्जननसमर्थं यत्काले तत्तदुत्पत्तिरिति स्वभावकल्पनायां बौद्धेन क्रियमाणायामित्यर्थः । समानः परिहार इति (११) स्थिरपक्षेऽपि कारणान्तरसाहित्येनैव कार्योपधायकत्वस्वभावस्य कारणे कल्पनेन समर्थासमर्थत्वाभ्यां भेदाभावादित्यर्थः । न

नस्य प्रत्यक्षवेद्यमानस्याधिकरणरूपस्याविद्याशङ्क्यते संविद्रूपतयेति(१०), उपरमति 'तथेत्यादि'(११), तथा ग्राह्यग्राहकाकार
विविक्तक्षणिकज्ञानत्वेन, सकृदप्येकवारमपि, अप्रतिभासनात् प्रमाणितवत् वेदान्त्यभिमतसकलप्रपञ्चविनिर्मुक्तपरमपदं,
तेऽपि हि प्रपञ्चरहितमद्वयविषयं विचारसाध्यं महावाक्यजन्यं प्रत्यक्षं स्वीकुर्वत एव ध्रुवमौपनिषदपरमकाष्ठाप्राप्तं शून्यप्रत्यक्षमिति
भावः। अद्वैतप्रत्यक्षं मिथ्या क्षणिकज्ञानाद्वैतप्रत्यक्षं सत्यमिति तु स्ववासनामात्रम्, कूटस्थानतिशायित्वमिति(१२२ १-२)
य एव नित्यैकान्तपक्षे दोषास्त एव क्षणिकपक्षेऽपीति भावः। किञ्च करणाकरणयोस्तज्जातीयस्य सतः सहकारिलाभालाभौ तन्त्रमि
त्यभ्युपगमे क्षणिकत्वं सिध्येत्, स चैकान्यकार्यप्यविरुद्धस्तथा तावनादृत्य कारणगतचैतन्यकल्पनमप्रामाणिकमन्यथा कार
णवत्कार्येऽपि किञ्चिद्विशेषोऽस्य स्यात्, यद्वा कारणापेक्षा स्यात्तु तज्जातीयस्येति यद्वा न नियतप्रवृत्तिसिद्धिरेव चापकेरपि
धूमसम्भावनया गतं कार्यलिङ्गकेन सङ्कीर्यते च कारणगता शक्तिरूपत्वाख्या विधिरूपा व्याप्तिरूपा वा व्याप्तिर्दम्भत्वाविना
परस्परपरिहारस्थित्योः समावेशे शीतोष्णयोरपि तथाभावप्रसङ्ग इति गतमनुपलम्भलिङ्गकेनापि क्वचिदपि विरोधासिद्धेस्ततो
विपक्षे बाधकाभावात् स्वभावहेतुरप्यपास्तः। अथास्ति तथा हि वृक्षजनकपत्रकाण्डाद्यन्तर्भूता शिंशपासामग्री सा वृक्षत्वम-
तिपत्य भवन्ती स्वकारणमेवातिपतेदिति चेत्, तर्हि शिंशपासामग्र्यन्तर्भूता चलत्वादिसामग्री तामतिपत्य चलरूपता भवन्ती
स्वकारणमेवातिपतेदिति तुल्यम्, नोदनाद्यागन्तुकनिबन्धनं चलत्वं न वृक्षविशेषमात्राधीनमिति चेत्, यदि नोदनादयः स्वभा
वभूतास्तदा वृक्षविशेषा एव, अथास्वभावभूतास्ततः सहकारिण एव, तथा च तास्तानासाद्य निर्विशेषैव शिंशपाचलस्वभावस्य
मारभत इति कुतः क्षणिकत्वसिद्धिः, स्वभावभूता एवागन्तुकसहकार्यनुप्रवेशाद्भवन्तीति चेत्, तर्हि वृक्षसामग्र्यामागन्तुकसह

पर्यन्तप्रवेशादेव शिंशपापि जायत इति न कश्चिद्विशेषः । एवमेतत्, किन्तु शिंशपाजनककारणसामग्रीमुपादायैव चलनज्ञानकारणस्तु न तामेव किन्तु मूर्तमात्रं तथादर्शनादिति चेत्, तर्हि शिंशपाया वृक्षविशेषत्वाविशेषे कौतस्कुतोयं फल प्रत्येकान्वाने-कान्तविशेषः । तत्कमहत्परिमाणाभावकृतः स इति चेत्, सर्वासामितरसकारिणोऽप्यस्वरूपा अपि केचिदल्पपरिमाणाश्री स्यास्तु न तथेति तथा तास्त्वेति न कश्चिद्विशेष इति स्यादिति कृता क्षणिकत्वं चैत्रात्म्याभ्युपगमे च कुतोऽनुमानबाधा माभू-दनुमानमिति चेत्, तर्हि तेन विना कुतस्तत्सिद्धं चेत्, न हि क्षणिकत्वे प्रत्यक्षमस्ति तथानिश्चयाभावात्, गृहीतनिश्चित एवार्थे तस्य प्रामाण्यात्, अन्यथातिप्रसङ्गादिति कृता चोक्तमुदितस्तदागुरुरत्यनाचार्यैः–" न चैवात्म्यं विना सत्स्यात्र तस्मिन्नत्र मा भवेत् ॥ न विना तेन तत्सिद्धिर्लोप्यर्थं निश्चयं विनेति ॥ १ ॥ " ॥ ८ ॥

भावैकान्ते पदार्थानामभावानामपह्नवात् । सर्वात्मकमनाद्यन्तमस्वरूपमतावकम् ॥ ९ ॥

पदार्थाः प्रकृत्यादीनि पञ्चविंशतितत्त्वानि । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥१॥" इति वचनात् । तेषामस्तित्वमेवेति निश्चयो भावैकान्तः । तस्मिन्नभ्युपगम्यमाने सर्वेषामितरेतराभावादीनामभावानामपह्नवः स्यात् । तथा सर्वात्मकत्वादिप्रसङ्गः । तत्र व्यक्ताव्यक्तयोरन्योन्याभावस्यापह्नवे व्यक्तस्याव्यक्तात्मकत्वे सर्वात्मकत्वम् । तथा च । 'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥१॥" इति व्यक्ताव्यक्तलक्षणभेदविरोधः । प्रकृतिपुरुषयोरन्योन्याभावनिह्नवे प्रकृतेः पुरुषात्मकत्वे सर्वात्मकत्वमेव । तथा च "त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि । व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥१॥" इति लक्षणभेदकथनमप्यपार्थकम् । प्रागभावस्यापह्नवे महदहङ्कारादेः

विकारस्यानादित्वप्रसङ्गात्। तथा च "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः। तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि॥१॥" इति
सृष्टिक्रमवचनं विप्रतिषिध्यते। प्रध्वंसाभावस्यापह्नवे तस्यानन्त्यप्रसङ्गात्, पृथिव्यादीनि पञ्च महाभूतानि पञ्चसु तन्मात्रेषु लीयन्ते—
पृथिव्या गन्धरूपरसस्पर्शशब्दतन्मात्रेषु प्रवेशात्, सलिलस्य रसादिषु, तेजसो रूपादिषु, वायोः स्पर्शशब्दतन्मात्रयोः, आकाशस्य शब्द-
तन्मात्रेऽनुप्रवेशात् तन्मात्राणां च पञ्चानां बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च मनसा सह षोडशकस्य गणस्याहङ्कारेऽन्तर्भावस्तस्य च महति
महतः प्रकृताविति संहारनिवेदनमपि व्याकुलं स्यात्। ततः सर्वमसद्रूपं, स्वेनासाधारणेन रूपेण कस्यचित्स्वस्य व्यवस्थानाघटनात्।
तत्र 'सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः। चोदितो दधि खादेति किमुष्ट्रं नाभिधावति॥१॥" इति दूषणास्पदप्रधानं मतम्, न तत्र भग-
वतोऽर्हतः कथञ्चिद्भावापह्नवाभावात्। ननु च व्यक्ताव्यक्तयोरितरेतराभावस्य तत्त्वभावस्य प्रकृतिपुरुषयोरत्यन्ताभावस्य च तद्रूपस्य
महदहङ्कारादीनां प्रागभावस्य च स्वकारणत्वभावस्य महाभूतादीनां प्रध्वंसाभावस्य च स्वान्तर्भावात्मस्वरूपस्य सांख्यैरभ्युपगमाद्भा-
वापह्नवासिद्धेः कथं सर्वात्मकत्वादिदोष इति चेत्, न, तथा भावैकान्तविरोधात् सर्वस्य भावाभावात्मकत्वप्रसक्तेः। न हि वयमपि भावा-
र्थान्तरमेवाभावं संगिरामहे, तस्य नीरूपत्वप्रसङ्गात्, नास्तीतिप्रत्ययजनकस्वरूपसद्भावादभावस्य नीरूपत्वाभावोपगमे तस्य भावसमा-
वरासिद्धेः प्रत्ययाभिधानविषयस्यार्थक्रियाकारिणः पदार्थस्य भावस्वभावत्वप्रतिज्ञानात्, नास्तित्वस्य वस्तुधर्मत्वादस्तित्ववत्। वस्तुनोऽ-
स्तीतिप्रत्ययविषयो हि पर्यायोऽस्तित्वं, नास्तीतिप्रत्ययविषयस्तु नास्तित्वम्। भिन्नयोरप्यनयोरैकान्त्यपक्षे सर्वात्मकत्वादिदोषानुषङ्गः कथं
परिहर्तुं शक्यः ?, सर्वविवर्तात्मकस्यैकस्यानाद्यनन्तस्य प्रधानस्येष्टत्वात् तद्व्यतिरेकेण सकलविशेषाणां वस्तुतोऽसम्भवात्सिद्धसाधनमिति
चेत् न, प्रकृतिपुरुषयोरपि विशेषाभावप्रसङ्गात्, सत्ताव्यतिरेकेण तयोरप्रतिभासनात्सत्ताद्वैतप्रसङ्गात्। तथास्तु, चेतनेतरविशेषाणाम

च सर्वात्मकत्वादिदोषानुषङ्गः परिहर्तुमशक्यः ॥ ९ ॥

भावैकान्त इति (१३४-२-९) भावैकान्तेऽस्तित्वमेवेत्यभ्युपगमे, अभावानाम्, (१०) अन्योन्याभावात्यन्ताभावप्राग भावप्रध्वंसाभावानाम्, प्रकृतेः पुरुषात्मकत्व इति (१२) प्रकृतौ पुरुषत्वात्यन्ताभावानभ्युपगमे पुरुषस्य जडत्वापातादि त्यर्थः। तथा भावैकान्तविरोधात् (१३५-१-९) यथाभ्युपगमे भावैकान्तप्रतिज्ञाया विरोधापत्तेरित्यर्थः। नीरूपस्याभाव स्य (१०) निःस्वभावत्वप्रसङ्गात्, नास्तित्वस्य च वस्तुधर्मत्वादिति (११) धर्मश्च धर्म्यभिन्न एवेति नाभावोऽतिरिक्त इति भावः। भेदाभेदवादापामेदाभयपक्षे तत्त्वेन भेदाभयपक्षे च तद्रूपित्वेन प्रतीतेरविरोधोऽन्यथा भावधर्मोऽप्यतिरिच्येत, एतेन भूत- लस्य घटाभावत्वे भूतले घटाभाव इति प्रतीतिर्न स्यात्, साक्षात् भूतले भूतलमिति धीरित्यपास्तम्। अभेदेऽपि घटाभावत्वेनाधेय तया भूतलत्वेन चाधारतया एव यथाप्रतीतिस्वीकारात्, न चाभावस्याधिकरणात्मकत्वे ध्वंसस्यात्मरूपत्वेनासाध्यतापत्ति- रित्यपि स्याद्वादमतात् प्रतिक्षणमात्मनोऽपि परिणामित्वेन कथञ्चित् साध्यताया इष्टत्वादिति दिक्, सर्वविपर्ययात्मकस्य (१३) निखिलसौख्यमात्राधिष्ठानस्य, तत्त्वत इति (१३) ग्रहत्या परं तत्त्वं न निषिध्यत इति भावः। 'अन्यथेति' (१३५-२-२) अनुमानमागमप्रमाणं वा न प्रतिपक्षं प्रमाणस्यानिर्विकल्पकप्रत्यक्षवदसिद्धस्यानुमानादिति भावः। तस्य (२) कारणमेवस्य, असिद्धत्वात् (४) समवायानवस्थिति भावः। तत एव (४) अभेदवादिनं प्रत्यसिद्धत्वादेव, स संविन्निर्भासभेदः, ज्ञानस्य प्रति भासनात् (४) इत्यभाषिणा तदनिर्वाच्याकारादिभेदो हेतुर्येभ्यः संवेदनाद्वैतवादी यद्वदे, मन्त्रिति (५) तद्वदता- पाद, तदन्यत्रापीति (६) तत्तर्हि, अन्यत्रापि प्रमाणेऽपि, विभ्रमाभावे (९) विभ्रमो नास्तीत्यभ्युपगमे, विरोधता

घन (९) संविन्निर्भासभेदरूपं, साधनाय भेदसाधनाय, तयोरेकं मयाऽज्ञानसचायां प्रमाणमावाच्चक्षुरादिसामग्रीप्रतिभासस्य
यो भेदस्तद्व्यवहारहेतोः, रूपादिव्यपदेशभाग् भवति, यथा भेदवादिन एकमेव ज्ञानं ग्राह्यग्राहकाकारमनियामकमात्र तय
रूपादिसमीचीनोऽविद्याविलास इत्यर्थः । 'योऽपीत्यादि' (११) एकमेव मयाऽभ्युपगच्छतोऽद्वैतवादिनो यथा नमादिविक-
ल्पोऽसत्यस्वभेतरेतराभावप्रत्ययोऽपीति न ततो भावस्याभावभेदसिद्धिरित्यर्थः । अभेदेऽपि (१२) अभेदस्य प्रामाणिकत्वेऽपि,
भूतलादिभावविषयत्वाभ्युपगमभूतलादिभावविषयत्वादित्यर्थः । कीदृशं तर्हि भूतलमिति चेत् , यादृशं तव घटाभावाधिकरणम् ,
उभयमपि पृच्छाम इति चेत्, पृच्छन्तु तावदेतदपि समनुभवं भवन्तः। भूतलस्वरूपत्वे घटाभावस्य घटागमनकालेऽपि तदपरावृत्ते
स्तदुपलम्भप्रसङ्ग इति चेत्, न । तदा तव कालघटितस्येव मम देशघटितस्याभावसम्बन्धस्यापगमकल्पने दोषाभावात्, एवं
सति कालविशेषघटितसम्बन्धेन भूतलादेरेव घटादिव्यवहारोपपत्तौ गतं घटादिनाऽपीति चेत्, नैवं द्रव्यार्थे इष्टत्वात्, पर्याया
र्थनये च घटादेरभावादेर्भावान्तरस्याभ्युपगमस्य दोषानावहत्वादिति। क्रमतोऽनन्तरूपा भावप्रतिपत्ताथेयेति (१२६–१–२)
क्रमेणानन्तसंख्यघटपटाद्यभावग्रहण एवेत्यर्थः। यद्यप्यनन्तानामभावानां प्रत्यासत्तिविशेषादेकदैव ग्रहणोपपत्तेः क्रमत इत्ययु
क्तम् , तथाऽप्यभावग्रहसामग्र्यविच्छेदाधाराद्याधिकरणग्रहसौलभ्यापेक्षयेत्ययुक्तिरिति सर्वम्यम्। ननु केवलाभावप्रत्यक्षाभ्युपगमे
स्यादयं दोषः सावकाशः, स एव चास्माकं नास्ति, अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वस्वीकारात्तत्कथमवापित्कृत्वे न चाभाव
ग्रहस्याधिकरणत्वमिति, यदैव न प्रतियोगिज्ञानं तदाऽभावग्रहान्वर्भावग्रहस्यालम्भापसरत्वमित्याशङ्क्याभावग्रहे प्रतियोगिग्रहहे
तुत्वं खण्डयन्नाह यद्यपि प्रतिपक्षेत्यादिना ( २ ), ततः स्मृतिनिरपेक्षमेव सर्वं प्रत्यक्षमिति, ( १२६–१–१० )

किकप्रत्यक्षापत्तेर्दुर्वारत्वात्, न च घटत्वविषयकघटज्ञानत्वेन तादृशहेतुत्वानुपपत्तिः, घटपटत्वनिर्विकल्पकोत्तरं तत्समूहालम्बनोत्तरं च तथाविधाभावलौकिकप्रत्यक्षापत्तेर्दुर्वारत्वात्, किन्तु घटत्वावच्छिन्नविषयताशालिज्ञानत्वं कारणतावच्छेदकम्, घटत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षत्वं कार्यतावच्छेदकमिति वाच्यम्। नन्वेवमपि घटत्वेन पटभ्रमदशायां घटत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षापत्तिर्दुर्वारा, न चेष्टापत्तिः, तथाविधाभावप्रत्यक्षस्य प्रतियोग्यंशे घटत्ववैशिष्ट्यभ्रमजनकीभूतदोषस्य तदाऽसत्त्वेन घटत्वेन पटाविषयकतया घटत्वेन घटज्ञानासत्त्वेन तद्विषयकत्वस्य च नेत्याकारकप्रत्यक्षपर्यवसन्नत्वेनेष्टापत्तेरसम्भवात्। न च तथाविधप्रत्यक्षं प्रति घटत्वावच्छिन्नघटविषयताशालिज्ञानत्वेन हेतुत्वाभ्युपगमेऽप्यापत्तिः, तथाविधदोषदशायां घटत्वेन पटज्ञानसत्त्वे तादृशाभावांशे घटत्वेन पटावगाहिनो भ्रमात्मकप्रत्यक्षस्यानुपपत्तेः, न च तादृशफलोपधायके घटत्वेन पटज्ञानस्यापि पृथग्घेतुत्वं कल्पनीयम्, तादृशज्ञानेन फलजनने तथाविधदोषस्य सहकारित्वकल्पनाच्च न पूर्वप्रदर्शितापत्तिरिति वाच्यम्, अनन्तकार्यकारणभावकल्पनापत्तिदोषोद्धारादिति चेत्, न। प्रामाणिकगौरवस्यादोषत्वात्। यत्तु घटत्वेन पटादिज्ञानकाले घटाभावांशे घटत्वेन पटभानजनकीभूतदोषस्य तत्तत्क्षणसम्बन्धरूपस्य नियमतः सत्त्वात्तत्र प्रमाज्ञानदशायां नेत्याकारकप्रत्यक्षापत्तिरिति तदानन्तर्यतत्क्षणसम्बन्धादीनां दोषत्वे प्रमाणाभावात्तत्कल्पने गौरवाच्च, अथ तथापि तद्धर्मावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षं प्रति तद्धर्मावच्छिन्नविषयताशालिज्ञानत्वेन न हेतुहेतुमद्भावः, समनियतसंख्यापरिमाणप्रमाणानामैक्येन संख्याविज्ञानोत्तरोत्पन्नसंख्यात्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षस्य परिमाणत्वावच्छिन्नप्रतियोगिताकाभावविषयतया परिमाणत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षे परिमाणत्वावच्छिन्नवि-

पयताख्यातिज्ञानहेतुतायां व्यभिचारात्, परिमाणत्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नपरिमाणनिष्ठविषयतानिरूपिताभाव विषयताकलौकिकप्रत्यक्ष एव तद्धेतुत्वकल्पने तु दीधितिकृदुक्तरीत्याऽभावबुद्धेर्विशिष्टवैशिष्ट्यमर्यादयैव गतार्थत्वेन प्रतियोगि ज्ञानस्य सार्वत्रिकेण हेतुत्वमप्रसक्तमिति चेत्, न। समनियताभावानां भिन्नत्वाभ्युपगमे दोषाभावात्परिमाणत्वावच्छिन्नप्रति- योगिताकत्वेनरूपरिच्छिन्नावच्छिन्नज्ञानत्वेन हेतुत्वान्न दोषः, अत एव प्राचां घटात्यन्ताभावादेर्घटादितत्त्वागमाभावत्वाभ्युपस प्रतियोगिकत्वेऽप्येकत्वं मतमस्यमित्यपरे, वस्तुतो घटत्वेन घटपटज्ञानयोर्दोषान्वयमीयानन्वयितत्वाभ्यां पृथक्कारणत्वस्य प्रागुक्त त्वात्समनियतावच्छेदकभेदादवच्छिन्नप्रतियोगितानांवत्वात्समनियताभावप्रत्यक्षस्थले न व्यभिचारः। इत्थमेव लघुधर्माऽभा- वस्य प्रतियोगितावच्छेदकत्वसम्भवे गुरौ तदभावेन कम्बुग्रीवादिमत्त्वावच्छिन्नविषयताशालिज्ञानोत्तरं घटत्वावच्छिन्नप्रतियो गितासम्बन्धेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारतानिरूपिताभावविषयताशालिनः कम्बुग्रीवादिमान्नास्तीत्याकारकस्य प्रत्यक्ष- स्योपपत्तिः, घटत्वावच्छिन्नाभावप्रत्यक्षे घटत्वावच्छिन्नविषयताशालिन इव कम्बुग्रीवादिमत्त्वावच्छिन्नविषयताशालिनोऽपि ज्ञानस्य हेतुत्वात्कार्ये साम्यवतिरेकस्यैव च व्यभिचारवारकत्वात्, कम्बुग्रीवादिमभिन्नकम्बुग्रीवादिमत्त्वावच्छिन्नप्रति योगिताकाभावेन च तत्र प्रामाण्याप्रामाण्योभयव्यवस्था भवेद्या, अन्ये तु कम्बुग्रीवादिमत्त्वावच्छिन्नविषयताशालिज्ञानकाले कम्बुत्वावच्छिन्नविषयताशालिज्ञानस्यावश्यकतया तदुत्तरं कम्बुत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षाभ्युपगमेन तदभा वांशेन तेन सम्बन्धेन कम्बुग्रीवादिमदभावात् कम्बुग्रीवादिमान्नास्तीति भ्रमस्वीकाराभावादनुपपत्तिरित्याहुः। न च तथापि वैशिष्ट्यप्रकारकज्ञानं विना जायमाने घटत्वादिना घटसामान्याभावप्रत्यक्षे तथाविधाभावलौकिकप्रत्यक्षं प्रति तेन

स्त्वावच्छिन्नप्रकारताशालिज्ञानहेतुतायां व्यभिचार इति वाच्यम्, तेजस्त्वावच्छिन्नप्रतियोगिताकाभावनिष्ठाभावत्वावच्छिन्नतौ
स्त्वावच्छिन्नप्रकारताशालिज्ञानहेतुत्वस्य तेजस्त्वप्रकारकज्ञानकार्यतावच्छेदकत्वोपगमात्, अभावं कार्यकारणभावप्रपञ्चः प्रतियोगिज्ञान
विशेष्यताशालिप्रत्यक्षत्वस्य तेजस्त्वप्रकारकज्ञानकार्यतावच्छेदकत्वोपगमात्, सैव च कुत्रचित्तदभावप्रत्यक्षप्रसिद्धया तदापत्तेरयोग्यादिति
शून्यकाले नेत्याकारकप्रतियोग्यभिभिन्नाभावप्रत्यक्षापत्तिवारणाय, सैव च घटाभावादावभावलौकिकप्रत्यक्षत्वावच्छिन्नापत्तौ क्रियमाणायां
चेत्, न, इन्द्रियसम्बद्धविशेष्यतावलात्प्रतियोगिज्ञानशून्यकाले घटाभावादावभावलौकिकप्रत्यक्षापत्तिसम्भवात्। अथ तद्धर्मावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षे
फलतः प्रतियोग्यभिभिन्नेत्याकारकाभावलौकिकप्रत्यक्षापत्तिसम्भवात्। अथ तद्धर्मावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षे
तादृशज्ञानत्वेन प्रतियोगिज्ञानहेतुत्वकल्पनेऽपि प्रतियोगितासम्बन्धेनाभावो न घटीय इत्याकारकाभावबुद्धित्वक्षायां घटज्ञान
काले घटत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षत्वावच्छिन्ने आपाद्यमाने फलतो नेत्याकारकापत्तिसम्भवः, तदा प्रतियो
गितासंसर्गेण घटज्ञानप्रतिबन्धकस्य तथाविधबाधज्ञानस्य सत्त्वेनाभावांशे तत्संसर्गकघटादिविषयकप्रत्यक्षोत्पत्त्यसम्भवादिति,
तन्न, तदानीमप्येकत्र द्वयमिति रीत्या घटाभावयोभयमभावांशे विषयीकुर्वाणस्य घटो नास्तीति प्रत्यक्षस्य सम्भवेन प्रति
योग्यभिभिन्नाभावप्रत्यक्षापत्त्यसम्भवात्। यदि चाक्षुषत्वज्ञानकाले निर्धर्मितावच्छेदकज्ञानस्याप्यनुत्पत्त्या प्रतियोगितास
म्बन्धेन घटो नाभाववृत्तिरित्यक्षुषत्वज्ञानकाले घटादिरूपप्रतियोगिज्ञानबलात्कार्यतावच्छेदकावच्छिन्नस्यापत्तौ क्रियमाणायां
फलतो नेत्याकारकापत्तिः सम्भवतीति मन्यते, तदा दोषबलात् घटत्वावच्छिन्नप्रतियोगितया इत्यनिरूपकसम्बन्धेन घटविशि
ष्टाभावप्रत्यक्षाभ्युपगमान्नानुपपत्तिः। यत्त्वभावो न घटीय इति बाधबुद्धेरेवासम्भवोऽस्याभावे प्रतियोगितया घटवैशिष्ट्या
वगाहित्वेन प्रतिबध्यतावच्छेदकाक्रान्तत्वादिति, तन्न, प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधारतासंसर्गकबुद्धेरेव प्रतिबध्य

स्यात् प्रतियोगितया घटस्मृतेः सामग्र्यात्, न हि संयोगसम्बन्धावच्छिन्नाधारतया गगनाद्यभाववत्तानिर्णयेऽपि संयोगमात्रेण गगनादिमत्ताबुद्ध्यनुदय इति। यदपि एके धर्मधर्मितावच्छेदकीकृत्य विरुद्धभावोभयप्रकारकनिर्णयानभ्युपगमात् शुद्धप्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभाववत्तारूपबाधस्यैव प्रकृते शरणीकरणीयत्वेन संयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिनिष्ठप्रतियोगिताकाभावनिर्णयेऽपि शुद्धप्रतियोगितासम्बन्धेनाभावांशे घटविषयकस्य घटो नास्तीत्याकारकस्याभावप्रत्यक्षस्योत्पत्तौ बाधकाभावेन प्रतियोग्यभिभिताभावलौकिकप्रत्यक्षापत्त्यसम्भवः, तदुक्तं—'पदार्थमालायां' तद्धानामपि सामान्यतः प्रतियोगिवैशिष्ट्यधीसम्भवादिति, सामान्यत इत्यस्य शुद्धप्रतियोगितासम्बन्धेनेत्यर्थ इति, तदपि न क्षोदक्षमम्, बाधकनिर्णयासत्त्वेऽपि प्रतियोगितासम्बन्धेन घटोऽभाविरिति ज्ञानस्य प्रतिबन्धकस्य जागरूकतया तथाविधज्ञानदशायां नेत्याकारकघटाभावलौकिकप्रत्यक्षापत्तेर्भिन्नोपदर्शितप्रकारे मतेनापि दुर्वारत्वादिति ध्येयम्। अथ भूतलादौ संयोगसमवायोभयप्रकारकनिर्धर्मितावच्छेदकज्ञानदशायां तत्र संयोगसमवायादियावत्सम्बन्धावच्छिन्नप्रतियोगिताकघटाभावलौकिकप्रत्यक्षापत्तिवारणाय समानविशेष्यतया तत्सम्बन्धावच्छिन्नतदभावलौकिकप्रत्यक्षं प्रति तेन सम्बन्धेन प्रतियोग्यारोपस्य हेतुत्वं कल्प्यत इति तत एव प्रतियोग्यभिभिताभावलौकिकप्रत्यक्षवारणात् किं तत्र प्रतियोगिज्ञानहेतुत्वेनेति चेत्, न, तस्य म्य येन तदारोपनियामकदोषाभावयुक्तौ सम्बन्धनियमोपपत्त्या रोपहेतुतायां मानाभावात्, अस्तु वा तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षे तत्सम्बन्धवद्भानं हेतुः, न तु तेन सम्बन्धेन तदारोपोऽपि, गौरवात्, तथा च प्रतियोग्यभिभिताभावलौकिकप्रत्यक्षापत्तिवारणाय प्रतियोगिज्ञानहेतुताऽऽवश्यकीति। अस्तु वाऽभावप्रत्यक्षे प्रतियोग्यारोपहेतुता तथापि तत्र

कारणतावच्छेदककोटौ प्रतियोगितावच्छेदकविषयतानिवेशे मानाभावाद्द्रव्यत्वेन घटस्य संयोगेनारोपस्थले घटत्वावच्छिन्न प्रतियोगिताकाभावांशे द्रव्यत्वेन घटप्रतियोगिकत्वभ्रमजनकदोषाभावे नेत्याकारकप्रत्यक्षापत्तिवारणाय प्रतियोगितावच्छेदक प्रकारकज्ञानस्य पृथग्धेतुत्वमावश्यकम्, प्रतियोग्यारोपजनकतावच्छेदककोटौ प्रतियोगितावच्छेदकविषयतानिवेशे सम्बन्धभेदे नानन्तकारणतावच्छेदकगौरवप्रसंगात्, दीधितिकृतस्तु प्रतियोग्यंशे विशिष्टवैशिष्ट्यविषयताशून्यस्य विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति विषयताशालिनोऽभावप्रत्ययस्यानभ्युपगमेनेन्द्रियसम्बन्धविशेषणतायाः फलजनने घटत्वादिविशिष्टवैशिष्ट्य बुद्धिं प्रति हेतुत्वेन क्लृप्तस्य घटत्वादिप्रकारकज्ञानस्य सहकारित्वस्वीकारेणैव नेत्याकारकप्रत्यक्षवारणस्य सम्यक्तयाऽभावबुद्धिं प्रति प्रतियोगिज्ञानस्य हेतुत्वकल्पनं निरर्थकमेवेत्याहुः ॥ तत्रेदं चिन्त्यते ॥ अभावप्रत्यक्षे जननीये इन्द्रियसम्बन्धविशेषणताया घटत्वप्रकारकज्ञानस्येव पटत्वप्रकारकज्ञानस्यापि सहकारित्वं स्वीकरणीयम्, अन्यथेन्द्रियसम्बन्धविशेषणताबलात्पटत्वावच्छिन्नाभावप्रत्यक्षस्य पटत्वप्रकारकज्ञानशून्यकालेऽप्युत्पत्त्यापत्तेः, तथा च पटत्वप्रकारकज्ञानसत्त्वे इन्द्रियसम्बन्धविशेषणतारूपकारणबलात् घटाभावप्रत्यक्षापत्तिः, न चेष्टापत्तिः, तदा घटाभावांशे पटभ्रमजनकदोषाभावेन पटस्य घटज्ञानासत्त्वे च घटत्वाभावेन नेत्याकारकप्रत्यक्षपर्यवसानात्, न च घटाभावादिनिष्ठेन्द्रियसम्बन्धविशेषणताया घटत्वावच्छिन्नविषयतानिरूपिताऽभावनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षहेतुत्वे तस्यां घटत्वप्रकारकज्ञानस्य सहकारित्वान्नोपदर्शितापत्तिः, न च पटत्वप्रकारकपटज्ञानकाले घटाभावांशे तज्ज्ञानजनकीभूतदोषसत्त्वे घटत्वावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षानुपपत्तिर्घटाभावनिष्ठविशेषणतायाः फलजनने घटत्वप्रकारकज्ञानतथाविधदोषादीनामपि सहकारित्वादिति वाच्यम्, विषयभेदेनेन्द्रियसम्बन्धविशेष-

णतायाः कारणताविरहप्रसङ्गात् । न च प्रतियोगिज्ञानहेतुतामतेऽपि विषयभेदेनेन्द्रियसम्बद्धविशेषणतायाः कारणतावैजात्यं विना न निस्तारः, पूर्वोपदर्शितापत्तेस्तन्मतेऽपि सम्भवादिति वाच्यम् । तन्मते लौकिकविषयतासम्बन्धेनाभावप्रत्यक्षं प्रति स्वप्रकारीभूतधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन ज्ञानत्वेन हेतुत्वकल्पनेनानुपपत्तेरभावात् उक्तसम्बन्धघटितसामानाधिकरण्येन ज्ञानविशिष्टाया एकस्या अपरस्याश्च तत्तद्दोषविशिष्टाया इन्द्रियसम्बद्धविशेषणताया अभावलौकिकप्रत्यक्षनियामकत्वे घटत्वप्रकारकज्ञानसत्त्वे घटाभावसन्निकर्षे आद्यायाः । घटत्वप्रकारकज्ञानसत्त्वे पटाभावांशे घटभ्रमजनकदोषसत्त्वे च द्वितीयायाः सत्त्वतया ऽभावलौकिकप्रत्यक्षोत्पत्तेस्तदवस्थत्वे च तदनुपपत्तेरिति । स्यादेतत्, नव्यमतेऽपि विषयभेदेनेन्द्रियसम्बद्धविशेषणताया न कारणताविशेषः तद्धर्मावच्छिन्नप्रतियोगिताकाभावसन्निकर्षे तदन्यधर्मप्रकारकज्ञानस्यैव तदभावांशे तत्प्रकारकभ्रमजनकत्वस्याभ्युपगमेन घटत्वप्रकारकज्ञानकाले इन्द्रियसम्बद्धविशेषणतारूपकारणसत्त्वादभावप्रत्यक्षस्य पटाभावे आपत्तेरिष्टापत्तिपरिहरणीयत्वात्, तदा दोषघटितस्यैव घटाभावांशे घटभ्रमजनकत्वेन तस्य स्वीकारादिति, मैवम्, तथापि नव्यैरिन्द्रियसम्बद्धविशेषणतायाः तत्कारिताघटत्वप्रकारकज्ञानत्वादिना नानाविधा स्वीकार्या, प्राचीनैस्तूपदर्शितसम्बन्धेन ज्ञानत्वेनैवेति प्राचीनमत एव लाघवात्, एवं चाभावलौकिकप्रत्यक्षजनकसामग्र्याघ्रातेन्द्रियसम्बद्धविशेषणतायामेककालीनत्वोपदर्शितसम्बन्धघटितत्वसामानाधिकरण्योभयसम्बन्धेन ज्ञानत्वेनैव घटत्वप्रकारकज्ञानादीनां निवेशः कर्तव्यो न तु प्रातिस्विकरूपेणेत्यपि प्राचीनमते लाघवं द्रष्टव्यम् । यत्तु नव्यमते विशेषणतावच्छेदकप्रकारकज्ञानस्यात्मनिष्ठसमवायप्रत्यासत्त्येन्द्रियसम्बद्धविशेषणतायाश्च विषयनिष्ठप्रतियोगितासम्बन्धेन हेतुत्वं कल्प्यत इति तयोः कारणतावच्छेदकसम्बन्धयोर्वैयधिकरण्येनैककालस्य घटत्वप्रकारकज्ञानकाले

पुरुषान्तरीयेन्द्रियसम्बद्धविशेषणतासत्त्वे पुरुषान्तरीयाभावलौकिकप्रत्यक्षापत्तिरिति, तन्न, एतदात्मसमवेतज्ञानादिव्यक्तेरात्मान्तरे आपत्तिवारणाय तदात्मसमवेतत्वावच्छिन्नं प्रति स्वात्मत्वेन तादात्म्येन हेतुत्वकल्पना तादात्म्यसम्बन्धघटितसामानाधिकरण्येन एतदात्मविशिष्टं यद् घटत्वप्रकारकज्ञानम्, एककालीनत्वसम्बन्धेन तद्विशिष्टा चैतत्पुरुषीयेन्द्रियसम्बद्धविशेषणता चैतत्पुरुषीयाभावलौकिकप्रत्यक्षनियामिकेति सामग्र्यभ्युपगमे दोषाभावात्। इदन्तु स्यात्, नव्यमते घटत्वप्रकारकज्ञानकाले घटाभावेन्द्रियसम्बद्धविशेषणतासत्त्वे भिन्नविषयकानुमितिसामग्रीविरहबलादात्मनि घटत्वावच्छिन्नविषयतानिरूपिताभावविषयताशालिप्रत्यक्षापत्तिर्दुर्वारा घटाभावलौकिकसन्निकर्षशून्यकाले तथाविधसामग्र्यभावरूपकारणबलात्तादृशप्रत्यक्षोत्पत्तिवारणाय तादृशसामग्र्यभावेन फले जननीये तथाविधसन्निकर्षस्य सहकारित्वकल्पना यदानीमेककालीनत्वसम्बन्धेन तादृशसन्निकर्षविशिष्टविरोधिसामग्र्यभावरूपायाः सामग्र्या अक्षतत्वात्, तथा च घटाभावप्रतियोगिविषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन घटाभावहेतुतामनायत्या कल्पयित्वा तादात्म्यप्रतियोगिताघटितसामानाधिकरण्यसम्बन्धेन घटाभावविशिष्टा येन्द्रियसम्बद्धविशेषणता तद्विशिष्टतथाविधविरोधिसामग्र्यभावरूपायाः सामग्र्या एतदात्मनि घटाभावप्रत्यक्षोत्पत्तौ नियामकत्वमभ्युपगन्तव्यमिति महागौरवम्। प्रतियोगिज्ञानहेतुतामते तु लौकिकविषयतयाऽभावप्रत्यक्षे स्वप्रकारीभूतधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन ज्ञानत्वेनैव हेतुत्वादुक्तसम्बन्धप्रतियोगिताघटितसामानाधिकरण्येन ज्ञानविशिष्टेन्द्रियसम्बद्धविशेषणताभावादेवोक्तस्थले नाक्षप्रत्यक्षं घटाभावे, तथा च विषयतासम्बन्धेनाभावप्रत्यक्षोत्पादकसामग्रीसहकारेणैव समवायेन तदुत्पादकसामग्र्याः कार्योत्पत्तिव्याप्यत्वाभोक्तापत्तिरिति घटाभावादिप्रत्यक्षोत्पादकसामग्र्यामिन्द्रियसम्बद्धविशेषणतायां विशिष्यानन्त

विषयत्वेऽविशिष्टानिवेशाल्लाघवमिति । अत्र ब्रूमः । एवं सति घटत्वेन घटज्ञानात्घटाभावसन्निकर्षे घटत्वेन घटाभावज्ञानं न स्यादिति घटत्वावच्छिन्नप्रकारतानिरूपिताभावविषयताशालिप्रत्यक्षमेव घटज्ञानकार्यतावच्छेदकं वाच्यमिति तद्ज्ञानात्केवलाभावप्रत्यक्षापत्तेर्निवारेण, न च घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावविषयताकप्रत्यक्षे घटादिविषयो हेतुस्तथाभावांशे निर्विकल्पकमभाव इत्याकारकप्रत्यक्षं च जायते निखिलप्रतियोगिज्ञानकार्यतावच्छेदकाक्रान्तत्वेऽप्यस्य प्रत्यक्षस्य यत्किञ्चित्प्रतियोगिज्ञानेऽसम्भवात्, यावत्प्रतियोगिज्ञानस्य चासम्भवादभावांशे निर्विकल्पकं स्वभावांशे यत्किञ्चित्प्रतियोगिवैशिष्ट्यविषयकत्वात् यत्किञ्चित्प्रतियोगिधीसाध्यमेवेति नानुपपत्तिः, इदन्त्वेन तमः प्रत्यक्षं त्वनुपपन्नमभावांशे निर्विकल्पकत्वं यावत्प्रतियोगिधीकार्यतावच्छेदकाक्रान्तत्वादिति वाच्यम् । केवलाभावस्य निर्विकल्पकप्रत्यक्षोपगमे भावांशेऽपि निर्विकल्पकस्याभाव इत्याकारकप्रत्यक्षस्य चोच्छेदापत्तेः, निखिलविशेषणज्ञानकार्यतावच्छेदकाक्रान्तस्य यत्किञ्चिद्विशेषणज्ञानेऽसम्भवात् । किञ्चैवं घटपटोभयाभावप्रत्यक्षे मतिरिति लाघवात् घटादिविषयो घटत्वावच्छिन्नप्रकारत्वानिरूपिताभावविषयत्वस्यैव कार्यतावच्छेदकत्वात्केवलस्य भावप्रत्यक्षस्येवाभावप्रत्यक्षस्य नानुपपत्तिः । एतेनाभावलौकिकप्रत्यक्षस्य घटत्वाद्यन्यतमविशिष्टविषयकत्वनियमात्विशेषसामग्री विना सामान्यसामग्रीमात्रात्कार्यानुत्पत्तेर्नाभावनिर्विकल्पकं नेत्याकारकप्रत्यक्षं चेत्यप्यपास्तम् । भावलौकिकप्रत्यक्षेऽपि तथा नियमापत्तेः, केवलभावप्रत्ययानुभवात्भावप्रत्यक्षे तथा नियमानभ्युपगमे च केवलाभावप्रत्ययानुभवादभावप्रत्यक्षेऽपि तथा नियमो न भवेत् । सत्यासत्ययोः केवलसप्रतियोगिकं नियमानुरोधेन सविकल्पकनिर्विकल्पकोपपत्तावेकान्तस्य व्यापकत्व तु भ्रुत्यादिदर्शनस्वादिति नैकतरपक्षपातो युक्तः ॥ यत्तदभावलौकिकप्रत्यक्षं प्रति प्रतियो-

गिज्ञानस्य हेतुत्वकल्पने इन्द्रियसम्बद्धविशेषणतया फले जननीये घटत्वप्रकारकज्ञानस्य सहकारित्वमसम्भवि, ययोः कार्य
तावच्छेदकयोः परस्परं व्याप्यव्यापकभावस्तयोरेव परस्परं सहकारित्वस्वीकारात्, अभावलौकिकप्रत्यक्षं प्रति प्रतियोगि-
ज्ञानस्य हेतुत्वकल्पनपक्षे तु घटादिनिष्ठप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपिताभावनिष्ठाभावत्वावच्छिन्नविषयताशालि
प्रत्यक्षत्वावच्छिन्नं प्रति घटमात्रनिष्ठधर्मावच्छिन्नप्रकारताशालिज्ञानत्वेन हेतुत्वं कल्प्यते तथा च घटत्वादिप्रकारकज्ञानेन्द्रियस
म्बद्धविशेषणतयोः कार्यतावच्छेदकयोः परस्परव्याप्यव्यापकभावेन ताभ्यां फले जननीये परस्परसहकारित्वस्य यौक्तिकत्वा
दिति, तदसत्, ययोः कार्यतावच्छेदकयोः परस्परं व्याप्यव्यापकभावस्तयोरेकेन फलेन जननीयेऽन्यस्य सहकारित्वं कल्प्यत
इत्यत्र मानाभावात्, ययोः कार्यतावच्छेदकयोः सामानाधिकरण्यं तयोरेकेन फले जननीयेऽन्यस्य सहकारित्वमित्यस्यैव स्वी
कारात्तुल्ययुक्तया प्रतियोगिज्ञानहेतुत्वासिद्धेः, सत्तायां असत्तायाश्च केवलाया धर्मिमात्रकत्वासम्भवेय भावात्, घटाद्युपरक्तत्वव्यव
हार एव घटादिज्ञानस्य हेतुत्वेन व्यवहारस्यैव सप्रतियोगिकत्वसिद्धिरिति दिग्। "मदर्शितोऽत्र प्रतियोग्यभावधीहेतुकार्य
त्वविचारभूमा॥ अस्मिन्ननेकान्तमतिप्रवेशात् क्षेत्रापक्षः क्वापि न पक्षपातः ॥१॥ अथ प्रकृतम्, अभाव भाव
भिन्नमनुपारमम्। अनुपलब्धेः (१२६ १ १४) अभावानुपलब्धेः, व्यवस्थापयेत् (१२६-२ १) प्रतिपद्येति शेषः। अथ भा
सत्ताविति (२) सुद भूतलमेव घटाभाव इत्येवं सार्वजनीनानुभवाद्धर्मिकल्पनात इत्यादिन्यायापातेति भावः। ' वस्त्वन्तर
रूपस्यैवेति' (४) अन्यवस्तुनिष्ठानस्यान्यवस्तुविषयत्वादिति भावः। नन्वेवं घटवदन्यभूतले घटाभाव इति प्रासे तथा चान्यत्वा
न्योन्याभावस्य चिन्तायामतिरिक्ताभावसिद्धिरिति चेत्, न, कालभेदेन वस्तुतो घटवदन्यस्य भूतलस्य तत्कालावच्छिन्नतादा

स्यमानभेदेन घटमानव्यवहारहेतुत्वाभ्युपगमे तदसिद्धेः, अस्तु वा भावत्वप्रभावत्वमलक्षणोपाधिर्घटादिनिरूपिताभावत्वेन भूतलादेरपि च योग्यानुपलब्धिसहकृतचक्षुरादिप्रतियोगिज्ञानादि च हेतुः, तथाज्ञानाच्च तथाव्यवहारः, इत्थं च विक्षेपकता दिव्यत्यासपक्कल्पनाज्ञापनमपीत्यस्मदेकपरिशीलितः पन्थाः। ततः (१२७-२-६) प्रत्यक्षतोऽन्यतो वा प्रमाणात्, अपरः (७) सत्याद्वैतवादी, व्यभिचारेण (७) सन्दिग्धव्यभिचारेण, विपक्षेऽपि (७) वस्तुनः एकत्वेऽपि, मायाबुद्ध्यादिकार्यनानात्वस्येति योगः। विविधकर्मतेति (८) बहुधीपुरस्सरम्, विविधकार्यकारित्वेत्यर्थः। भाष्ये शक्तिनानात्व (९) एकस्यापि नर्तक्यादिकस्य शक्तिभेदोऽस्ति, कुतः, प्रसवविशेषात् (१०) नानाबुद्ध्यादिकार्यदर्शनात्, तत्र सत्याद्वैतवाद्याह—स (१०) प्रसवविशेषो वस्तुनानात्वेन व्यभिचारी चेत् (१०), कुतस्तद्गतिः (१०) शक्तिनानात्वसिद्धिस्ततो यत्किञ्चिदेतदित्यर्थः। वृत्तौ, तस्यापि (११) एकनर्तकीक्षणस्यापि, प्रसवविशेषो (१०) बुद्ध्यादिकार्यविक्षेपोऽप्यभिचारीत्यध्याहारप्रक्षेपेण व्याख्येयम्। 'नर्तक्यादीति' (११) कार्यभेदनियतकारणताभेदस्य शक्तिभेदप्रयुक्तत्वाभ्युपगमे समनियतशक्तीनां प्रत्येकमपि बुद्ध्यादिनानाकार्यकारित्वस्य पक्षादापातादेकैकशक्तावपि शक्त्यन्तरापत्तौ तत्रापि तत्स्वीकारे दुस्तरानवस्थानदीति भावः। वस्तुनानात्वाभावे कुतस्तद्व्यवहार इत्यत्राह सत्याद्वैतवादी 'केवलमिति' (१२) सत्याद्वैतवादेऽप्यविद्याकल्पितैः शक्तिभेदैर्वस्तुनानात्वं व्यवह्रियताम्, न तु वास्तवं तत्, अत एव सौगतसाधर्म्यादिकल्पितस्कन्धपञ्चकप्रभृतिविज्ञप्तितत्त्वादिविषयकत्वा अपि तथागतवचनप्रामाण्याविद्यामूला नाद्वैततत्त्वं बाधन्त इति हृदयम्। साधनव्यभिचारात् (१२७-१-१) बुद्धिविक्षेपादेर्वस्तुनः कूटस्थत्वेऽप्यविद्यामहिम्ना सम्भवात् सर्वविक्षेपसाधनानां सन्दिग्धव्यभिचारित्वादिति भावः। सत्याद्वैत

कार्यस्यात्मलाभात्प्रागभवनं प्रागभावः । स च तस्य प्रागनन्तरपरिणाम एवेत्येके तेषां तत्पूर्वानादिपरिणामसन्ततौ कार्यसद्भाव प्रसङ्गः । तदितरेतराभावरूपस्य तदभावस्योपगमाददोष इति चेत्, तदनन्तरपरिणामेऽपि तत एव कार्यस्याभावसिद्धेः किमर्थः प्राग-भावः परिकल्प्यते ? कार्यस्य प्रागभावाभावस्वभावत्वसिद्ध्यर्थमिति चेत्, कथमेवं कार्यात्पूर्वपर्यायेष्विव इतरेषु तत्पूर्वोत्तरपरिणामेषु कार्यस्वभावत्वं न प्रसज्येत ? प्रागभावाभावस्वभावत्वाविशेषेऽपि कश्चिदेव पर्यायः कार्यं न पुनरितरे परिणामा इत्यभिनि-वेशमात्रम् । स्यान्मतं 'कार्यात्प्रागनन्तरपर्यायस्तस्य प्रागभावः । तस्यैव प्रध्वंसः कार्यं व्याप्ति । न पुनरितरेतराभावो येन तत्पूर्वो-त्तरसकलपर्यायाणां घटत्वं प्रसज्येत । न च तेषां प्रागभावप्रध्वंसरूपतास्ति तदितरेतराभावरूपतोपगमात्' इति, तदेतदपि सुगतमता-नुसरणम् स्याद्वादिनामायातम्, स्वमतविरोधात् । प्रागभावो ह्यनादिरिति तन्मतम् । तत्र घटस्य पूर्वानन्तरपर्यायमात्रप्रागभावस्यो-पगमे विरुध्यते । द्रव्यार्थादेशादनादिः प्रागभावोऽभिमत इति चेत्, किमिदानीं मृदादिद्रव्यं प्रागभावः ?, तथोपगमे कथं प्रागभावाभाव स्वभावता घटस्य घटेत ? द्रव्यस्याभावासंभवात् । तत एव न कदाचिद् घटस्योत्पत्तिः स्यात् । यदि पुनः पूर्वपर्यायाः सर्वेऽप्यनादि सन्ततयो घटस्य प्रागभावोऽनादिरिति मतम्, तदापि प्रागनन्तरपर्यायनिवृत्ताविव तत्पूर्वपर्यायनिवृत्तावपि घटस्योत्पत्तिप्रसङ्गः । तथा सति घटस्यानादित्वं पूर्वपर्यायनिवृत्तिसन्ततेरप्यनादित्वात् । ननु च न प्रागनन्तरपर्यायः प्रागभावो घटस्य, नापि मृदादिद्रव्यमात्रम्, न च तत्पूर्वसकलपर्यायसन्ततिः । किं तर्हि ? द्रव्यपर्यायात्मा प्रागभावः । स च स्यादनादिः स्यात्सादिरिति स्याद्वादिदर्शने निरवद्यमेवेति चेत्, न एवमप्युभयपक्षोपक्षिप्तदोषानुषङ्गात् । द्रव्यरूपतया तावदनादित्वे प्रागभावस्यानन्तत्वप्रसक्तेः सर्वदा कार्यानुत्पत्तिः स्यात् । पर्या-यरूपतया च सादित्वे प्रागभावात्पूर्वमप्युत्पत्तिः प्रागिव कथं निवार्येत ? न च गत्यन्तरमस्ति । ततो न भावस्वभावः प्रागभावः, तस्य

भावविलक्षणत्वात्पदार्थविशेषत्वसिद्धेः' इत्यन्ये। तेपि न समीचीनवाचः, सर्वथा भावविलक्षणस्याभावस्य ग्राहकप्रमाणाभावात्। 'स्वोत्पत्तेः प्रागासीद् घट इति प्रत्ययोऽसद्विषयः, सत्प्रत्ययविलक्षणत्वात्। यस्तु सद्विषयः, स न सत्प्रत्ययविलक्षणो, यथा घटोऽयमित्यादिप्रत्ययः, सत्प्रत्ययविलक्षणश्चायं, तस्मादसद्विषयः' इत्यनुमानं प्रागभावस्य ग्राहकमिति चेत्, न, प्रागभावादौ नास्ति, प्रध्वंसाभावादिरितिप्रत्ययेन व्यभिचारात्। तस्याप्यसद्विषयत्वान्न दोष इति चेत्, न, अभावानवस्थाप्रसङ्गात्। स्यान्मतम्, भावे भूभागादौ नास्ति कुम्भादिरिति प्रत्ययो मुख्याभावविषयो, प्रागभावादौ नास्ति प्रध्वंसादिरित्युपचरिताभावविषयः। ततो नाभावानवस्थेति, तदप्ययुक्तम्, परमार्थेन प्रागभावादीनां साङ्कर्यप्रसङ्गात्। न चोपचरितेनाभावेन परस्पराभावानां व्यतिरेकः सिध्येत्, सर्वत्र मुख्याभावपरिकल्पनानर्थक्यप्रसङ्गात्। यदप्युक्तम्, न भावस्वभावः प्रागभावादिः, सर्वथा भावविशेषणत्वादिति, तदपि न सम्यगनुमानम्, हेतोः पक्षाव्यापकत्वात्, न प्रागभावः प्रध्वंसादिस्तयोरभावविशेषणस्याप्यभावस्य प्रसिद्धेः, गुणादिना व्यभिचाराच्च, तस्य सर्वथा भावविशेषणत्वेपि भावस्वभावत्वात्। रूपे घटः प्रागासीदित्यादिव्यवहारेण गुणस्य स्वतन्त्रस्यापि प्रतीतेर्न सर्वथा भावविशेषणत्वमस्येति चेत्, सर्वभावस्वरूपमित्यभावस्यापि स्वतन्त्रप्रतीतेः सर्वथा भावविशेषणत्वं मा सिधत्। सामर्थ्यात्तद्विशेष्यस्य द्रव्यादेः, प्रत्ययस्य तदा भावविशेषणमेवाभाव इति चेत्, तथैव गुणादिः सन्तु भावविशेषणमस्तु, तद्विशेष्यस्य द्रव्यस्य सामर्थ्याद्गम्यमानत्वात्। किञ्च प्रागभावः सादिः सान्तः परिकल्प्यते सादिरनन्तो वानादिरनन्तो वाऽनादिः सान्तो वा ? प्रथमे विकल्पे प्रागभावात्पूर्वं घटस्योपलब्धिप्रसङ्गः, तत्तिरोधायिनः प्रागभावस्याभावात्। द्वितीये प्रागभावकाले घटस्यानुपलब्धिप्रसक्तिः, तस्यानन्तत्वात्। तृतीये तु सदानुपलब्धिः। चतुर्थे पुनर्घटोत्पत्तौ प्रागभावस्याभावे पटोपलब्धिवत्सर्वपदार्थोपलब्धिः स्यात्, सर्वकार्याणामुत्पत्स्यमानानां प्रागभावस्यैकत्वात्। यावन्ति कार्याणि तावन्तस्तत्प्रागभावाः। तत्रैकस्य प्राग-

रिविकल्पमात्रत्वात्प्रागभावादिव्यवहारं प्रवर्तयति द्रव्यादिविकल्पमात्रात् द्रव्यादिव्यवहारवत्, प्रमाणादिप्रकल्पादिरूपकल्पनादिविकल्प-
मात्राद्व्यवहारवच्च । ततो न प्रागभावः कश्चिदिह प्रतीयते प्रध्वंसाभावादिवत् । इति प्रागभावादिनिह्नवं कृत्वा पृथिव्यादिकार्यद्रव्यमभ्युप-
गच्छन्सांख्योऽनेनोपालभ्यते, न पुनः सांख्योऽन्यो वा, तस्य कार्यद्रव्यानभ्युपगमात्, तिरोभावाविर्भावपरिणामोपगमेपि भावस्वभाव-
प्रागभावाद्यभ्युपगमस्यापि सद्भावात् । तत्र प्रागभावस्य प्रसिद्धस्याप्यपकल्पने निह्नवः । तस्मिन्निह्नूयमाने कार्यद्रव्यं पृथिव्यादिकमनादि
स्यात् । प्रध्वंसस्य च धर्मस्य स्वभावस्य प्रत्ययोऽपलापः । तस्मिन्निषिध्यमाने तदनन्ततां प्रजेत् । न चानाद्यनन्तं पृथिव्यादिकं प्रागभावाद्य-
भाववादिनाभ्युपगन्तुं शक्यते, स्वमतविरोधाल्लोकायतिकत्वप्रसङ्गात् । कथं पुनः प्रागभावः प्रसिद्धः, यथोक्तरूपविपर्ययतया व्यवसि-
तभावादिति चेत्, न, स्याद्वादिभिरभीष्टे प्रागभावे यथोक्तरूपानवकाशात्, नैयायिकादिभिरभिमतस्य तु तस्य तैरपि निराकरणात् ।
ऋजुसूत्रनयार्पणाद्धि प्रागभावस्तावत्कार्यस्योपादानपरिणाम एव पूर्वोऽनन्तरात्मा । न च तस्मिन् पूर्वानादिपरिणामसन्ततौ कार्यसद्भावप्रसङ्गः,
प्रागभावविनाशस्य कार्यरूपतोपगमात्, "कार्योत्पादः क्षयो हेतोः" इति वक्ष्यमाणत्वात् । प्रागभावतत्प्रागभावादेस्तु पूर्वपूर्वपरिणामस्य
सन्तत्यानादेर्विवक्षितकार्यरूपत्वाभावात् । न च तत्रास्येतरेतराभावः परिकल्प्यते, येन तत्पक्षोपक्षिप्तदूषणावतारः स्यात् । नाप्येवं प्रागभाव-
स्यानादित्वविरोधः, प्रागभावतत्प्रागभावादेः प्रागभावसन्तानस्यानादित्वोपगमात् । न चात्र सन्तानिभ्यस्तत्त्वान्यत्वपक्षयोः सन्तानो
दूषणादिः, पूर्वपूर्वप्रागभावात्मकभावक्षणानामेवापरामृष्टभेदानां सन्तानत्वाभिप्रायात् । सन्तानिक्षणापेक्षया तु प्रागभावस्यानादित्वाभा-
वेपि न दोषः, तथा ऋजुसूत्रनयस्येष्टत्वात् । तथास्मिन्पक्षे पूर्वपर्यायाः सर्वेप्यनादिसन्ततयो घटस्य प्रागभाव इति वचनेपि न प्रागन-
न्तरपर्यायनिवृत्ताविव तत्पूर्वपर्यायनिवृत्तावपि घटस्योत्पत्तिप्रसङ्गः, येन तस्यानादित्वं पूर्वपर्यायनिवृत्तिसन्ततेरप्यनादित्वादापाद्यते, घटात्पू-

पात्मनि पूर्वप्रवर्तिनि सति प्रध्वंसस्य कार्यत्वेन स्वरूपभेदोपपत्तेस्तयोरन्यतमाभावेऽप्यस्तु तुच्छयोरेवाभावयोरेकत्वाविरोधात् । तथा, व्यवहारनयादेशादनादिद्रव्यं घटोत्तरकालवर्ति घटाकारविकलं घटप्रध्वंसः । स चानन्तः समवतिष्ठते । तेन घटात् पूर्वकालवर्ति मृदादिद्रव्यं घटस्य प्रागभाव एव, न पुनः प्रध्वंसः, तथा घटात् परमपि तत्तस्य प्रध्वंसो मा भूत्, घटाकारविकलमिति विशेषणात् । नन्वेवं घटोत्तरकालवर्तिघटाकारविकलसन्तानान्तरमृदादिकमपि तत्प्रध्वंसः स्यादिति चेत्, न, द्रव्यग्रहणात् । वर्तमानपर्यायसमनन्तरमेव हि मृदादिकं तद्द्रव्यमन्वयीष्यते, न पुनः सन्तानान्तरं, तस्य स्वपर्यायमेवातीतमनागतं वा प्रत्यन्वयिनस्तद्द्रव्यत्वविरहात् । तदेवं प्रसिद्धः प्रध्वंसो वस्तुधर्मः । तस्य प्रध्वंसोऽहेतुक एव बौद्धस्य । तस्मिंश्च कार्यद्रव्यं पृथिव्यादिकमनन्ततां प्रसेदिति समन्तभद्रस्वामिनामभिप्रायः । इति कारणस्वकर्मण्येव एवमुपपद्यते, कपिलमतानुसारिणां प्रागभावानभ्युपगमे घटादेरनादित्वप्रसङ्गात् पुरुषव्यापारानर्थक्यं स्यात् । न च पुरुषव्यापारमन्तरेण घटादि भवदुपलभ्यते क्वचित्, इति कार्यद्रव्यं तदापादनीयम् । तत्र प्रागभावस्य निह्नवेऽनादि स्यादिति सूक्तं भूषणम्, भाषणस्याप्यसम्भवदुपलम्भोपपत्तेः । एतेन मीमांसकानां शब्दस्य प्रागभावानभ्युपगमेऽनादित्वप्रसङ्गात् पुरुषव्यापारानर्थक्यं स्यादित्युक्तं प्रतिपत्तव्यम् । शब्दस्याभिव्यक्तौ पुरुषव्यापारस्योपयोगान्नानर्थक्यमिति चेत्, न, तत्र प्राक् तदावरणप्रमाणाभावादभिव्यक्तिकल्पनानुपपत्तेः । घटादेर्हि समन्धकारावृतस्य प्रदीपव्यापारात्पूर्वं सद्भावावेदकप्रमाणस्य स्पर्शनप्रत्यक्षादेः संभवादुपपन्ना प्रदीपेनाभिव्यक्तिकल्पना, न पुनः शब्दस्य, तदभावात् । प्रत्यभिज्ञानादेस्तत्सद्भावावेदकस्य प्रमाणस्य भावाद्दोष इति चेत्, न, तस्य विरुद्धत्वात्, शब्दस्याभिव्यक्तेः पूर्वं सर्वथा सत्त्वासाध्यादिपरीतेन कथञ्चित्सत्त्वेन व्याप्तत्वादन्यथा प्रत्यभिज्ञायमानत्वाद्यनुपपत्तेः । ततोऽभिव्यञ्जकव्यापारात् प्राक् शब्दस्याभिव्यक्तिकल्पना मुधा । एतेन कुम्भकारादिव्यापारात् घटाद्यभिव्यक्तिकल्पना प्रत्युक्ता । कल्पयित्वापि तदभिव्यक्तिं तस्याः प्रागभावोऽपि

दृष्टान्ते प्रमाणाभावात्। आवरणविगमविशेषाधानयोर्हि शब्दपुरुषश्रोत्राणां स्वरूपत्वे तेषां याज्ञिकैरपि नित्यत्वोपगमात्कथं प्रागभावः संभवेत्?, संभवे वा प्रकृतकार्यत्वप्रसङ्गः अभिव्यक्तिवत्। पुरुषप्रयत्नेन अभिव्यक्तिः प्रागसती क्रियते, न पुनस्तत्स्वरूपं शब्दः पुरुषः श्रोत्रं वेति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम्। एवं हि कपिलमतानुसारिणां घटादेरभिव्यक्तिः प्रागसती चक्रदण्डादिभिः क्रियते न पुनर्घटादिरित्यपि शक्यं प्रदर्शयितुम्। यथात्र न कश्चिद्विशेषहेतुस्तथा ताल्वादयो व्यञ्जकाः, न पुनश्चक्रादयोपीति, ते वा घटादेः कारकाः, न पुनः शब्दस्य ताल्वादयोपीति। न हि व्यञ्जकव्यापृतिर्नियमेन व्यङ्ग्यं संनिधापयति। संनिधापयति च ताल्वादिव्यापृतिर्नियमेन शब्दम्। ततो नासौ ताल्वादीनां व्यङ्ग्यः प्रदीपादीनां घटादिवत्। नायं दोषः, सर्वगतत्वाद्वर्णानाम्, इत्यपि वार्तम्, प्रमाणतस्तथाभावस्याभावात्, अन्यत्रापि तथाभावानुषङ्गात्। शक्यं हि वक्तुम्, घटादीनां सर्वगतत्वाच्चक्रादिव्यापारानियमेनोपलब्धिरिति। इत्थमस्तु दोषोयं कापिलानामिति चेत्, न, कारणव्यापारेष्वपि चोद्यानिवृत्तेः, चक्रादीन्यपि कारणानि स्वव्यापाराणां नियमेन संनिधापकान्यभिव्यञ्जकानि भवन्तु, तेषां सर्वगतत्वादेवेति चोद्यस्य निवर्तयितुमशक्यत्वात्। एतेनानवस्था प्रत्युक्ता। स्वव्यापारोत्पादने हि कारणानां व्यापारान्तराणि कल्पनीयानि तथा चानुत्पादनेपीत्यनवस्था स्यात्, न पुनः स्वव्यापाराभिव्यक्तौ, तत्संनिधिमात्रादेव तत्सिद्धेः अन्यथा व्यञ्जककारकयोरविशेषप्रसङ्गात्। कारणव्यापाराणां च कारणेभ्यो भेदैकान्तो वा स्यादभेदैकान्तो वा?, भेदैकान्ते तद्वतोनुपयोगः, तावतेतिकर्तव्यतास्थानात्। व्यवहारिणामभिमतकार्यसंपादनमेव हीतिकर्तव्यता। तस्याः स्थाने यदि व्यापारेभ्य एवैकान्ततो भिन्नेभ्यो भावानामुत्पत्तेस्तदा किं व्यापारवतान्यत्साध्यम्, यतस्तस्योपयोगः कश्चिदुपपद्येत?, तद्वतो व्यापाराणामभेदैकान्तेभिव्यक्तिप्रसङ्गस्तद्वत् इव व्यापाराणां सर्वदा सद्भावः। तेषां प्रागभावे वा व्यापाराः प्रागसन्तः क्रियन्ते, न पुनस्तद्व्यतिरेकिणोपि तद्वन्त इति स्वरुचि

व्यापारादुपलम्भ इति चेत्, स तर्हि प्रागसन् कारकैः क्रियते न पुनर्घटादिरिति वचनमात्रम्। अथ तस्यापि प्राक्तिरोहितस्य सत एव कारकैराविर्भावान्तरमिष्यते, तर्हि तस्याप्यन्यस्तस्याप्यन्यदाविर्भावनिबन्धनस्यानवस्थानान्न कदाचित् घटादेराविर्भावः स्यात्। अथाविर्भावस्योपलम्भरूपस्य तद्रूपाविर्भावान्तरानपेक्षत्वात् प्रकाशस्य प्रकाशान्तरानपेक्षस्वभावत्वस्येति चेत्, तर्हि तस्य कारणात् रसमभ्युपगन्तव्या, ततः कार्यमाविर्भाव इति। तदुक्तादिकमपि, अपेक्षितपरव्यापारत्वाविशेषाद्घटादौ। न ह्यस्माकमकाम-स्योपलम्भः सत्त्वा कर्तुम्, सर्वथातिप्रसङ्गात्। तदेवं प्रधानपरिणामवादापीष्टं घटादिकं कार्यद्रव्यमापाद्यते। तस्य च प्रागभावापह्नवेऽनादित्वप्रसङ्गात्कारणव्यापारानर्थक्यं स्यादिति सूक्तं दूषणम्। प्राक्तिरोभावस्योपगमे वा स एव प्रागभावः सिद्धः, तस्य तिरोभाव इति नामान्तरकरणे दोषाभावादुत्पादस्याविर्भाव इति प्रमाणान्तरकरणवत्। ततो न मीमांसकस्य सांख्यमतानुसरणं युक्तम्, सर्वथा शब्दस्य प्रागभावाभ्युपगमेऽनादित्वप्रसङ्गात् पुरुषव्यापारानर्थक्यस्य समर्थनात्। तथा विनाशानभ्युपगमे तस्य किं दूषणम्? स्यावरणकत्वमिति चेत्, नैतत्सारम्, तदास्मानमसम्भवतः कस्यचिदावरणस्यायोगात्। तिरोधायकस्य कस्यचिद्वायुविशेषस्य शब्दास्मानं सम्भवत एवावरणत्वे सभावभेदप्रसङ्गः, आवृतानावृतस्वभावयोरभेदानुपपत्तेः। तयोरभेदे वा शब्दस्य श्रुतिरश्रुतिर्वैकान्ततः प्रसज्येत, पुरुषव्यापारात्पूर्वम् श्रुतिस्तदनन्तरं श्रुतिरितिविभागानुपपत्तेः। स्यान्मतम्, यथा घटादेरस्मानसम्भवतमसस्यावरणं तथा शब्दस्यापीति, तदसत्, तस्यापि तेनास्मरणानोपगमात्, दृश्यस्वभावस्य सम्भवतमसस्यावरणस्यासिद्धेः, सर्वस्य परिणामित्वसाधनात्। तमसापि घटादेरखण्डने पूर्वं तदुपलब्धिः किम भवितुमर्हति, तस्य तेनोपलभ्यतयाप्यकल्पनात्। ननु च पुरुषव्यापाराद्ध्वाद् पश्चात् शब्दस्याप्यभिव्यक्तस्वभावत्वेपि नैकान्ततः श्रुतिः, सहकारिकारणापेक्षत्वात्, स्वविज्ञानोत्पादने तदश्रुतेरपि तदेकस्य संभवादिति चेत्, तर्हि किमयं शब्दः स्वविषयसंविन्-

क्षमाणानामारम्भकपुद्गले तदेकदाम्यर्थितमुपादाने सहकारिणि च सति तत्तात्वादिकरणे वक्तृविज्ञानस्य वर्णोत्पत्तौ सहकारिकारणस्या- ऽन्यतरस्य क्रममपेक्ष्य क्रमोत्पत्तौ परिणामिनो न किञ्चिद्विरुद्धं पश्यामः, कारणक्रमानुविधायित्वात्सर्वत्र कार्यक्रमस्य, शब्दपरिणामिनामेव तथाविरोधदर्शनात्। नापि श्रोतृविज्ञानस्य शब्दकार्यस्य क्रममपेक्ष्य वर्णक्रमप्रतिपत्तौ किञ्चिद्विरुद्धं पश्यामः, प्रमाणक्रमानुविधायित्वा- त्तथाविरोधदर्शनात्। नापि श्रोतृविज्ञानस्य शब्दकार्यस्य क्रममपेक्ष्य वर्णक्रमप्रतिपत्तौ किञ्चिद्विरुद्धं पश्यामः, प्रमाणक्रमानुविधायित्वा- तथाविरोधदर्शनात्। तत्र संकुला श्रुतिः स्यादादिनो प्रसज्येत। सर्वगतानामेव तदक्रमभूतमभिव्यक्तिक्रमस्य सततमपरिणामिनामेवारम्भता तद्विरोधनिर्णयात्। नन्वेवं नित्याः सर्वगता वर्णाः, नापि नित्याः प्रत्येतव्याः। ननु च नित्या क्रमो दुष्करः स्यात्। ततः क्रमोत्पत्तिप्रतिपत्त्योरन्यथानुपपत्त्या न सर्वगता वर्णाः, नापि नित्याः प्रत्येतव्याः। ननु च नित्या वर्णाः प्रत्यभिज्ञानादात्मादिवदिति चेत्, क्षणिकत्वेन करणाङ्गुल्यादिषु प्रत्यभिज्ञानादिकत्वो हेतुः। एतेन बुद्धिकर्मभ्यां व्यभिचारी च हेतुरुक्तः बुद्धिकर्मभ्यां व्यभिचार इत्यभिधानात्। ननु बुद्धिकर्मणोरपि नित्यत्वोपगमाभावं दोषः, ते अपि नित्ये इति वचनात्, तथोपगमे विरोधाभावादिति चेत्, तर्हि घटस्यापि किमिदानीमनेकं स्यात्? तथा घटस्यैकत्वेपि न किञ्चिदनेकं स्यादित्यपि प्रति पत्तव्यम्, सर्ववर्णैकत्वप्रसङ्गात्। सत्यं हि वचनं, अभिव्यञ्जकभेदाद्वैरूप्यं तत्सम्प्रत्ययात्, कपिलस्याप्यविरोधे तदन्यत्राप्यविरोधः कुतः?, यथैव हि नानादेशजनप्रतिबिम्बितस्य चन्द्रस्यानेकत्वप्रतीतावपि परमार्थतश्चन्द्रैकत्वं तथैव नानादेशव्यञ्जकभेदादकारादिवर्ण नानात्वप्रतीतावपि वर्णैकत्वमिति वदतः कः प्रतिघात? प्रत्यक्षविरोधो वर्णैकत्ववचने स्यान्न पुनः क्रियादेरेकत्ववचने घटादिकस्येति कुतो विभागः सिध्येत्?, ततो वर्णाद्वैतमनिच्छता न करणाङ्गुल्यादिक्रियैका वक्तव्या, येन शब्दस्य नित्यत्वसाधने प्रत्यभिज्ञाने विरुद्धं न स्यात्। तदयं तात्वादिव्यापारजनितश्रावणस्वभावं परित्यज्य विपरीतस्वभावमासादयदपि नित्यश्चेत्, न किञ्चिदनित्यम्। एतेनैवमकारा- दिवर्णस्य जगत्यामेकत्वमपीत्यपि निरस्तम्, युगपद्भिन्नदेशस्वभावोपलम्भे घटादिवत्। नानुमानेऽनन्त इति चेत्, न, तस्य सकलेभ्यस्तथोप

अस्मिन्नभ्युपगमे जैन्याः प्रक्रियाया विरोधः स्यादिति सूत्रमाह, 'तदेतदपीत्यादि' (७) 'द्रव्यार्थादेशादिति' (८) सौगतैश्च पर्यायार्थमात्रादेशः स्वीक्रियत इति न तत्प्रक्रियानुसरणेनोभयनयवादिनो जैनस्य सिद्धान्तव्याकोप इति मानः। प्रागभावाभावस्य भावता (८) घटप्रागभावध्वंसरूपता, तद्द्रव्यस्य (९) मृद्द्रव्यस्य, अभावासम्भवात् (९) घटोत्पत्तिक्षणे ध्वंसासम्भवात्, अत एव (९) घटस्य मृद्द्रव्यरूपघटप्रागभावध्वंसत्वाभावादेव, न जातुचिदिति (९) घटोत्पत्तेर्घटप्रागभावध्वंसोत्पत्तिनियतत्वादिति भावः। यदि पुनरिति (९) क्रमेषु पूर्वपर्यायेषु घटप्रागभावत्वमात्रकल्पने लाघवाच्च्व्यक्त्यादिना तेषां सादित्वेऽपि घटप्रागभावस्येनानादित्वेऽपि विरोधाभावाच्चेति भावः। 'तदपीति' (१०) न च घटप्रागभावत्वावच्छिन्नप्रतियोगिताकध्वंसस्य घटोत्पत्तिव्याप्यत्वाभावे दोष इति शङ्कनीयम्। ध्वंसस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे मानाभावात्, एकघटवति घटान्तरप्रागभावसत्त्वेन तदसम्भवाच्च, एतेन यावद्घटप्रागभावध्वंसवत्त्वं घटोत्पत्तिव्याप्यमित्यपि निरस्तम्, असम्भवात्। न च यावत्तद्घटप्रागभावध्वंसवत्त्वं तद्घटोत्पत्तिव्याप्यमित्यपि वक्तुमुक्तम्, गौरवात्, सम्यविशेषे व्याप्तिविरहाच्च॥ द्रव्यपर्यायात्मेति (१२) प्राक्तनपर्यायेषु मृद्द्रव्ये च घटप्रागभावत्वं व्यासज्यवृत्तीत्यर्थः, प्रत्येकवृत्तेः समुदायावृत्तित्वनियमात् प्रागभावत्वस्य प्रत्येकवृत्तित्वधर्मे तदादाय सूत्रमाह 'नैयमप्युभयेत्यादि' (१२)॥ न च पर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकतद्घटप्रागभावत्वावच्छिन्नप्रतियोगिताकतद्घटप्रागभावाभावस्य तद्घटोत्पत्तिव्याप्यत्वाभावे दोष इति वाच्यम्। एवं सति घटप्रागभावत्ववत् घटत्वघटध्वंसत्वादेरपि द्रव्यपर्यायोभयपर्याप्तत्वापत्तेरतीन्द्रियवृत्तित्वेनाप्रत्यक्षत्वापत्तेश्च, एतेन विशिष्टद्रव्यप्रागभाववादोऽपि निरस्तः।

विशेषमाननुभवेनाननुभवस्य व्यवहारासम्भवात्। तदिदमाह न च गत्यन्तरमस्तीति (१४) ॥ उपसंहरति 'ततो नेति' (१४) ततो द्रव्यपर्यायात्मकत्वाभावात् भावस्वभावः प्रागभावः (१४)॥ 'हेत्वन्तरमाह–भावविलक्षणत्वादिति भावधे धर्म्यादिस्वर्थः, तत्र हेतुमाह–भाव(पदार्थ)विशेषणत्वसिद्धेरिति नियमतो भावविशेषणतया प्रतीयमानत्वादित्यर्थः। अन्ये नैयायिका एवं ब्रुवते, तान् दूषयति–तेऽपीति' (१४५-१-१) प्राग् नासीत् घट इति (२) प्रागभावप्रतियोगि-समकालरूपविशेष्यकप्रत्ययसमित्यर्थः। एतेन प्रागभावप्रतियोगिनोऽनागतस्य भानार्थं सामान्यलक्षणप्रत्यासत्तिकल्पनं प्राचां नैयायिकानामपास्तम्। घटविशेष्यकप्रागभावप्रतियोगित्वप्रकारकप्रत्ययोपगमे दोषाभावात्, विद्युदादिवत् विनश्यत् स्वविषयकप्रत्ययस्य सविकल्पकस्य निर्विकल्पकक्रमेण सामग्रीविशेषादेवमेव वा स्वीकर्तुं शक्यत्वात्। प्रतियोगित्वस्यापि प्रतियोगिस्वरूपस्य योग्यतानुसारिविषयस्य तथाभिव्यञ्जकत्वेनानतिप्रसङ्गात्, यैरपि चरमकारणसामग्र्युपलक्षितं प्रागभावस्य प्रतिपाद्यते, तैरपि चाण्डालस्पर्शानन्तरं घटोत्पादो दुस्तरश्चतुरेव व्यञ्जकत्वमुपेयमुक्तसामग्र्याः स्वरूपसत्याः स्वरूपेण ज्ञाततया वा व्यञ्जकत्वेऽतिप्रसङ्गात्, व्याप्यत्वेन ज्ञातायास्तस्याः प्रागभावानुमितेरेवोपपत्तेः, तत्प्रत्यक्षानभ्युपगमात्, तदर्थमुपाधिविषयस्यैव प्रागभावप्रतियोगित्वेन घटस्यैव जनकत्वं कल्पनीयमिति, विपक्षबाधकाभावे कार्यसहभावेन हेतुत्वे चरमसामग्रीकाल एव प्रागभावस्योपगमे तु प्राग् नासीत् घट इति कथमप्युपपादयितुमशक्यम्। तथा घटप्रागभाव आसीदित्यस्याप्यनुपपत्तेः, तथा भविष्यतीत्याकारप्रत्ययं च शिरोमणिरेव दूषितम्, 'भविष्यत्त्वं हि न वर्तमानप्रागभावप्रतियोगित्वम्, यो भाविन्यपि भविष्यतीतिप्रत्ययप्रसङ्गात्। किन्तूत्तरस्मिन् भविष्यतीत्यादेः समानार्थकत्वात् वर्तमानप्रागभावप्रतियो-

ग्युत्पत्तिकत्वं वर्तमानकालोत्तरकालोत्पत्तिकत्वं वा,न चेदमप्यप्रत्युत्पत्तेरतीन्द्रियत्वादित्यादिना,"इत्यनुमानमिति।(२) यद्यपि प्रागभावप्रागभावे प्राग् नासीत् पट इति प्रत्यक्षमेव यथोक्तमुपपद्यते तथापि तस्य भावाभावविषयत्वसंशये उक्तानुमानाश्रयमिति तात्पर्यम्।चरमसामग्र्या हेतुना प्रागभावोऽनुमीयत एवेति केचित्, तदसत्, अनुयोगिताविशेषरूपप्रागभावत्वादेः क्वचिद्प्रतीतौ ताद्रूप्येणानुमानासम्भवादिति दीधितिकारः, प्राग् नासीदिति प्रत्यक्षमुत्पद्यमानघटाकारपरिणतमृद्द्रव्यविषयमेव, प्रागभावादेरभावस्याधिकरणस्वरूपस्यैव स्वीकाराभास्तीतिप्रत्ययबलेनातिरिक्ताभावस्वीकारेऽभावेऽप्यभावान्तरापत्तावनिष्टप्रसक्तेरित्याद्यपत्तानाद्वेति चेत्, नेत्यादि। उपचरितेनाभावविषय (५) इत्यभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणानतिरेकादित्यर्थः। ननुपचरितेनाभावेनेत्यादि (६) त्वन्मत इति शेषः। अस्मन्मते त्वधिकरणात्मकाभावेनैव सर्वत्रोपपत्तेर्नानाधिकरणस्वरूपत्वेऽपि गौरवाभावादतिरिक्ताभावकल्पनानर्थक्यमिष्टमेव, त्वया नानाधिकरणेष्वभावस्य तादात्म्यातिरिक्तः सम्बन्धः कल्पनीयः, मया तु तादात्म्यमिति तदैव गौरवात्। हेत्वन्तरबीजमुपन्यस्य दूषयति–यदप्युक्तमित्यादिना (९)॥ सामर्थ्यादिति (१०) अभिलापाभावेऽपि विशिष्टज्ञानसामग्रीबललभ्यत्वादित्यर्थः। एतद् गुणादावपि तुल्यमित्याह–'तद्विरोध्यस्येति' (१०) सविकल्पकनिर्विकल्पकस्यानेकान्तस्तु भावित एव प्राक्। अतिरिक्तोऽपि प्रागभावो लाघवादेक एव कल्पनीयः प्रतियोगिभेदेनाभावभेदे मानाभावादिति पक्षं परिगृह्य तस्यानादिसान्तत्वं दूषयितुमुपक्रमते–किञ्च प्रागभाव (११) इत्यादिना, अनन्ताः प्रागभावा इति पक्षमुपन्यस्य दूषयति–'यावन्तीत्यादि'(१४) स्वतन्त्रमावस्त्वं (१५५-२-१) अन्यानाश्रिताः, भावतश्चा (२) भावाश्रिता, कालादिवदिति कालाकाशदिगादीनां हि स्वतन्त्राणां भावत्वं

तदा स्वक्षणे प्रागभावस्य भावत्वं स्यादिति भावः । न चानुत्पन्न इत्यादि ( ४ ) ॥ अत्रेदं चिन्त्यम्, अनुत्पन्नः प्रध्वस्तो वा प्रागभावस्य ध्वंसस्य च नाशयोऽभ्युपगम्यते, किन्तु प्रतियोग्यपेक्षयानभ्युपगतोपालम्भोऽयम्, प्रतियोगित्वं च तयोः स्वरूपसम्बन्धविशेषरूपं ज्ञानविषयतावदेवोपपद्यत इति । 'यदि पुनरेक एवेति' (५) वैलक्षण्ययोर्विशेष्यहेतुत्वेनानतिप्रसङ्गात् तत्कार्यनियमाय तदन्याभावो न कल्पनीयः, किन्तु व्यवहारार्थम्, स चैकत्वेऽपि विशेषणभेदात्क्रमत्वोपचारेण निर्वहतीत्यर्थः । कार्यस्येवेति ( ७ ) पूर्वकालावच्छिन्नप्रतियोगितया घटविशिष्टोऽभावो घटप्रागभावः १ । उत्तरकालावच्छिन्नप्रतियोगितया तादृशः स घटध्वंसः २ । तादात्म्यावच्छिन्नप्रतियोगितया तादृशः स इतरेतराभावः ३ । तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगितया तादृशः सोऽत्यन्ताभाव इत्यर्थः ४ । अत्यन्तमेवस्यापि तथोपपत्तेरिति ( ८ ) न चैवं स्नेहप्रतियोगिकाभावस्यैव गन्धप्रतियोगिकत्वात् पृथिव्यां न स्नेह इति वत् न गन्ध इति व्यवहारापत्तिरिति वाच्यम् । विशिष्टाधारताभेदस्वीकारेणोपपत्तेः, तत्र स्नेहप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारतासत्त्वेऽपि गन्धप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारताभावात्, समवायैकत्ववादेऽपि रूपवदीरूपत्वादिविशिष्टव्यवहारस्येत्थमेवोपपत्तेः, सर्वैकत्वप्रतिबन्द्याऽभावैकत्वं शिक्षयतीति दृष्टान्तद्वारेणाह—सर्वैकत्वेऽपीत्यादिना (९)॥ ननु सत्त्वेति (१२) विशेषणभेदेन विशिष्टसत्ताभेदात्तदाधारताभेदाद्वा प्रतिनियतभेदव्यवहारोपपत्तेरित्यर्थः । इयमेव रीतिरभावेऽप्यनुसर्तव्येत्याह तर्हि तत एवेति (१३) अस्त्वेवमेक एवाभावस्तत्राह—न चैकोऽप्यभाव इत्यादि(१३) ॥ द्रव्यादीत्यादि (१४१–१–१) यथा वैशेषिको लोको द्रव्यादिषट्पदार्थविकल्पमात्रा द्रव्यादिव्यवहारं प्रवर्तयति, यथा वा प्रमाणादिषोडशपदार्थवादी नैयायिकः, प्रकृतिमहदादिपञ्चविंशतिपदार्थवादी साङ्ख्या,

रूपादिस्कन्धपञ्चकवादी सौगतश्च तदविकल्पापचयव्यवहारं प्रवर्तयति—यथा गतानुगतिको लोके विषयनिरपेक्षमेव विकल्पमात्रात् प्रागभावादिव्यवहारमित्यर्थः । ततो नेत्यादि (१४१–१–२) प्रमाणेन न प्रतीयत इत्यर्थः । असत्ख्यात्या प्रतीयमानस्वरूपं शशविषाणवा-ध्येयसौभ्रात्रपात्रतामनुभवतीति ध्वयम् । न पुनः साङ्ख्योऽन्यो वेति (२) साङ्ख्यः कापिलो, योगादिरन्यः, साङ्ख्यस्यानुपालम्भपात्रत्वे हेतुमाह—तस्येति, उपचरितकार्यद्रव्याभ्युपगममधिकृत्याह—' तिरोभावेत्यादि(२) भावस्यभायेत्यादि'(३) तथा च न, साङ्ख्यस्य सर्वथा प्रागभावापह्नवोऽसत्ख्यातिविषयतोपगमस्यैव तदर्थ-स्यादिति भावः । अन्यस्य योगादेरनुपालम्भपात्रत्वे तु व्यक्त्या प्रागभावस्वीकार एव हेतुर्द्रष्टव्यः, तेऽपीति (७) स्याद्वादिभिरपीत्यर्थः । अपिना नैयायिकैकदेशिभिरपि तन्निराकरणं सूच्यते, तथा च दीधितिकृन्मतानुसारिणः, ननु प्रागभावे किं मानं? न तावत् प्रत्यक्षम्, असिद्धेः । घटो भविष्यतीत्यादिप्रत्ययस्य वर्तमानकालानन्तरकालोत्पत्तिकत्वविषयत्वात्, नाप्यनुमानम्, अप्रयोजकत्वात्, न च घटादिकार्यधारावारणाय प्रागभावसिद्धिः, कार्यद्रव्यत्वावच्छिन्ने समवायेन द्रव्यत्वावच्छिन्नाभावस्य हेतुत्वेनैव तद्वारणात्, न चाव्याप्यवृत्तेः कार्यस्य द्वितीयक्षणे उत्पत्त्यापत्तिः, समानावच्छेदकतया तत्र भावस्य हेतुत्वात्, न च संयोगादेः प्रदेशनियमः स्वसमानाधीनाधिकरणप्रागभावप्रादेशिकत्वादिति प्रागभावसिद्धिः, तद्देशादिहेतुत्वेनैव तन्नियमात्, न च तथापि निर्विकल्पकस्य चतुर्थक्षणे उत्पत्तिवारणाय तत्रोत्तरज्ञानाभावस्य कारणत्वं वक्तव्यम्, तथा च लाघवात्प्रागभावस्य तत्त्वमुचितमिति वाच्यम्, तन्निर्विकल्पककालोत्पत्तिकत्वसम्बन्धादेरेव तत्र प्रतिबन्धकत्वात्तत्तदभावस्य च तद्धेतुत्वात्तुतो निर्विकल्पकत्वस्य कार्यतानवच्छेदकत्वात्तस्यप्रत्यक्षसामग्रीसत्त्वे तादृशप्रत्यक्षोत्पादनियमान्निर्विकल्पकापत्तिरेव

तत्र सत्यपते प्रागभावस्य नाशत्वं स्यादिति भावः । न चानुत्पन्न इत्यादि ( ४ ) ॥ अत्रेदं चिन्त्यम्, अनुत्पन्नः प्रध्व-
स्तो वा प्रागभावस्य ध्वंसस्य च नाशयोऽभ्युपगम्यते, किन्तु प्रतियोग्यैवैत्यनभ्युपगतोपालम्भोऽयम्, प्रतियोगित्वं च तयोः
स्वरूपसम्बन्धविशेषरूपं ज्ञानविषयतावदेवोपपद्यत इति । 'यदि पुनरेक एवेति' (५) देशकालयोर्विशेष्यहेतुत्वेनानतिप्रसङ्गात्
तस्यार्थनियमाय तदाभावभावो न कल्पनीयः, किन्तु व्यवहारार्थम्, स चैकत्वेऽपि विशेषणभेदादिभसोपचारेण निर्वहती-
त्यर्थः । कायस्यैवेति ( ७ ) पूर्वकालावच्छिन्नप्रतियोगितया घटविशिष्टोऽभावो घटप्रागभावः १ । उत्तरकालावच्छिन्नप्रतियो-
गितया तादृशः स घटध्वंसः २ । तादात्म्यावच्छिन्नप्रतियोगितया तादृशः स इतरेतराभावः ३ । तादात्म्येतरसंसर्गावच्छिन्न-
प्रतियोगितया तादृशः सोऽत्यन्ताभाव इत्यर्थः ४ । अभावभेदस्यापि तथोपपत्तेरिति ( ८ ) न चैवं स्नेहप्रतियोगिकाभा-
वस्यैव च प्रतियोगिकत्वात् पृथिव्यां न स्नेह इति जले न गन्ध इति व्यवहारापत्तिरिति वाच्यम् । विशिष्टाधारतामेवस्वीकारे
दोषाभावः, तत्र स्नेहप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारतासत्त्वेऽपि गन्धप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारता-
भावात्, घटत्वाद्यवच्छेदेऽपि रूपवत्वीरूपत्वादिविविधव्यवहारस्येत्थमेवोपपत्तेः, सचैकत्वप्रतिपन्न्याऽभावैकत्वं सिद्धान्तीति
दृष्टान्तद्वारेणाह—सतीकत्वेऽपीत्यादिना (८) ॥ ननु सत्वेति (१२) विशेषणभेदेन विशिष्टस्वाभेदापत्त्याधारतामेदाच्च प्रति-
नियतव्यवहारोपपत्तेरित्यर्थः । इयमेव रीतिरभावेऽप्यनुसर्तव्येत्याह तर्हि तत एवेति (१३) अस्त्वेवमेक एवाभावस्तत्राह—
न चैकोऽप्यभाव इत्यादि(१३) ॥ द्रव्यादीत्यादि (१४१-१-१) यथा वैशेषिको लोके द्रव्यादिषट्पदार्थविषयमात्रा-
द्रव्यादिव्यवहारं मनुते, यथा वा प्रमाणादिषोडशपदार्थवादी नैयायिकः, प्रकृतिमहदादिपञ्चविंशतिपदार्थवादी साङ्ख्यः,

दुर्घटा, सामग्र्याः कार्यतावच्छेदकावच्छिन्नव्याप्यतया एव स्वीकारात् । अथ तथापि यावत्तन्तुषु भाविनः पटस्य द्वित्र्यादितन्तुषु संयुक्तेषूत्पत्तिः स्यात्, सामग्रीसत्त्वात्, न च प्रागभावस्यापि सत्त्वात्तथापि तदनुत्पत्तिर्दुर्घटा, तत्प्रागभावव्याप्यचरमसंयोगत्वेन हेतुत्वादिति चेत्, न, कतिपयसंयोगेष्वतीतेष्वनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात्तत्पटव्याप्ययावत्संयोगत्वेनैव हेतुत्वसम्भवाच्च, वस्तुतः सामग्र्याः कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्यतया एवोपगमात्तदा द्वित्र्यादितन्तुकपटस्यैवोत्पत्तेः तावत्तन्तुकपटस्यापादकाभावो व्यक्तिस्थानीयापत्तिविरहात्, तर्हि तत्पटत्वावच्छिन्ने किं नियामकम्, सामान्यतः स्वसमवायिकारणतावच्छेदकपर्याप्तसंयोगादितादृशनियामकत्वमेव हेतुत्वमिति चेत्, तर्हि प्रागभावस्वीकारेऽपि तत्त्वं दुर्वारम्, स्वरूपेण तदान्यथासिद्धत्वमिति चेत्, तदेति विफलम्, तर्हि अन्यसत्त्वेन सत्त्वेन हेतुहेतुमद्भावेनैव निर्वाहोऽस्त्विति चेत्, न । अन्तुत्वादिना कारणत्वबुद्धिव्यपदेशयोरप्रामाण्यापत्तेः, किमाकस्मिकत्वं स्वावच्छिन्नसामग्र्यनियमे एतावत्त्वेऽवश्यं पटोत्पत्तिरित्यनियमः, इदं च प्रवृत्तिरपि दुर्घटा । तादृशनियम एव कृतिसाध्यताधीसम्भवात्, तत्पटस्यावच्छिन्नस्याकस्मिकत्वं स्थितम्, तद्धर्मावच्छिन्नसामग्रीसत्त्वेऽपि तथानियमायोगात् तद्धर्मावच्छिन्ने प्रवृत्त्यभावाच्च, किञ्च विशेषान्वयव्यतिरेकाभ्यां सामान्यव्यभिचारानिर्णयात्तु गुरुविशेषान्वयानुपस्थितिलाघवाद्विप्रतिसन्धानदशायां सामान्यत एव हेतुहेतुमद्भावग्रहात् प्रागभावादेव न विशेषकार्यकारणभावसिद्धिः । व्यक्तिस्थानीयापत्तिसत्त्वेऽपि च तदा यावत्तन्तुकमुत्पत्तिविरहचरमसंयोगहेतुत्वादेवोपपद्यते । अथास्तु क्लृप्तनियमचरमसंयोगहेतुत्वात्तथापि देशनियमाय प्रागभावसिद्धिः, तावत्सतन्तूनां तावत्संयोगानां च विशिष्य तद्धेतुत्वे गौरवात् व्यभिचाराच्च तत्प्रागभावस्यैव लाघवात्तत्पटहेतुत्वात्, किञ्च यत्र यत्र-

मन्तुरूपटस्य मध्येऽन्यतरसंयोगनाशात्तस्याश्चतन्तुपटयोरुत्पत्तिस्तत्र तयोः कालनियमस्य तत्तन्तुकनाशहेतुत्वेनैव सिद्धौ देशनियमाय प्रागभावसिद्धिरिति चेत्, न। तत्र चरमसंयोगस्तत्तन्तुकनाशयोः स्वसमानाधिकरणान्यतमत्वविशेषसंसर्गेण हेतुत्वादेव देशनियमस्यापि सम्भवात्। न च यत्र युगपदुत्पन्नैः तत्तन्तुसंयोगैः पट आरभ्यते तत्र चरमसंयोगानामपि तत्तत्त्वेन हेतुत्वे गौरवात् प्रागभावसिद्धिः, तत्रापि यावत्संयोगमात्रवृत्तिजात्या द्रव्यारम्भकत्वानच्छेदकजात्यैव वा तत्कालावच्छिन्ना न्यतमत्वसंसर्गेण हेतुत्वात्। न च बुद्धिविशेषेण विनिगमकाभावः, तस्य प्रत्यक्षवच्चादिरूपतया निर्णयाभावाभिधिताऽप्यमि बहूनां तन्तूनां युगपदुत्पन्नानन्तसंयोगादुत्पन्नपटस्य चारकस्य संयोगस्यैव हेतुत्वात्। स्यादेतत्, व्यक्तिस्थानीयापत्तिसत्त्वे बहूनां तन्तूनां युगपदुत्पन्नानन्तसंयोगादुत्पन्नपटस्य नानासंयोगनाशाभ्यां पुनस्तेषामेव तन्तूनां संयोगान्तरात्पटान्तरोत्पत्तिकाले उत्पत्तिवारणाय प्रागभावसिद्धिः, उत्तरपटस्तु प्राग् नोत्पद्यते पूर्वपटध्वंसस्यापि तद्धेतुत्वात्। न च प्राक्तनपटे बहुत्वविशेषस्य हेतुत्वान्न दोषो नव्यनये तद्बहुत्वस्याग्रेऽपि सत्त्वादीश्वरानन्तभाक्तनपटोत्पत्तिवारणाय कार्यस्यावच्छिन्ने प्रागभावत्वेन हेतुत्वस्यैकस्यैवोचितत्वात्, आकाशाद्युदासीन मादाय बहुत्वस्य हेतुतापत्तेरिति चेत्, न, ईश्वरीयोपादानप्रत्यक्षादेस्तत्कालावच्छिन्नतत्पटावच्छिन्नविशेष्यतया हेतुत्वेऽनु पपत्त्यभावात्॥ वस्तुतस्तत्कालावच्छिन्नतत्पटहेतुतत्संयोगाभावकूटात्यन्ताभाव एक एव कालदेशनियामक इति मतनः विपया इति दिक्॥ अत्र तत्कालावच्छिन्नतदेशस्वरूपापत्तेस्तयाऽन्यतया एव तत्कार्यदेशकालनियामकत्वम्, न च विनिगमकाभावः, सामानाधिकरण्यप्रत्यासत्त्यैव विनिगमकत्वादित्यस्मदीयाः॥ प्रागभावतत्प्रागभावादेस्त्विति (९) घटस्य प्रागभावः इत्थं तस्य कोशत्वस्य स्यात्तस्यापि मृत्पिण्ड एव परमाणौ विश्रान्तिः, तत्परम्परानाधारघटप्रध्वंसप

विद्रव्यरूपत्वे च सम्बन्धविशेषावच्छिन्नप्रतियोगिताकः स इति तत्त्वम् । पर्यायरूपतयापीति ( ४ ) नानारूपा जुगतस्य प्रथमावपर्यायस्यैकस्यापि कल्पनादित्यर्थः । यद्यप्यनुगतगुणपर्यायाधारतया प्रत्यभिज्ञानविषयतया च न तदेकत्वं सिद्ध्यति, तथापि घटादौ घटप्रागभावादेरेकस्यैव हेतुत्वे लाघवात्तस्यैकत्वसिद्धिरिति परमार्थः । अनेकत्वेऽपि कथञ्चि देकत्वं स्याद्वादरहस्यविरुद्धमेव शरीरादिदृष्टान्तेन तद्भ्रस्यति, स चैकानेकस्वभाव इत्यादि ( ८ ) ॥ कारणस्येति ( १२ ) नहि कपालमालारूपघटकार्यनाशे घटकारणं जायते, विपरीतव्याप्तेरभावात्, न च तदभावे घटोत्पत्तिरापादयितुं शक्यत इत्यर्थः । मृदादिद्रव्यमिति (१४७-१-२) घटप्रध्वंसे व्यवहारहेतुता तु न घटोत्तरकालवृत्तिघटाकारविकलघट द्रव्यत्वेन, उत्तरत्वस्य ध्वंसगर्भतयात्माश्रयादिदोषापत्तेः, किन्तु स्वोत्तरकालवृत्तित्वस्याकारविकलत्वस्य द्रव्यस्यैतन्मितयसम्बन्धेन तत्तद्घटविशिष्टमृदादित्वेन चेति बोध्यम् । प्रमाणार्पणया घटविशिष्टत्वेन स्वोत्तरकालावच्छिन्नत्वपरिचायितस्वद्रव्यत्वसम्बन्धेन तत्तद्घटविशिष्टमृदादित्वेन चेति बोध्यम् । प्रमाणार्पणया तु प्रध्वंसो द्रव्यपर्यायात्मैकानेकस्वभावमेति प्रागवदेव द्रष्टव्यम् । कार्यद्रव्यं तथापादनीयमिति (८) पुरुषव्यापार नान्तरीयकत्वेन घटादेः कार्यद्रव्यत्वं साधनीयमित्यर्थः । ततश्च प्रागभावाप्रतियोगित्वेन तस्यानादित्वमापादनीयम् । घटा दिकार्यद्रव्यं यदि प्रागभावाप्रतियोगि स्यादनादि स्यादित्येवमिति बोध्यम् । तदाह–' तथेत्यादि ' कार्यस्यानादित्वयोरुभ योरापादने तु प्रागभावनिह्नवस्य न कथमपि सामर्थ्यमित्येवं व्याख्यातम् । ' आपाद्यस्यापीति ' (९) स्वतन्त्रानुमानवत् प्रसङ्गापादनस्यापि प्रतिवादिद्रूपकत्वसामर्थ्यादिति बोध्यम् । अतिदिशति एतेनेति ( ९ ) ॥ तस्य विरुद्धत्वादिति ( १२ ) घट्योऽभिव्यक्तेः प्राक् सन् स एवायमिति प्रत्यभिज्ञायमानत्वादित्यत्र सर्वथा प्राक् सत्ताया एव साध्यत्वा

पामेऽप्येव पर्यनुयोगस्तुल्य इति (१४८–२–२) अवस्था कालकृतो विशेषः, परिणामस्तु सत एव प्रवेशपरिणामाविनाभ्यथा मान इति विशेषः। तस्य (५) प्रधानस्य, तत्कार्यत्वेन (५) उपकारकार्यत्वेन, उपकार्यत्वस्य कार्यत्वविशेषत्वादित्यर्थः। भाष्ये 'सर्वं समानमिति' (५) परिणामभेदाभेदपक्षद्वयमित्यर्थः, तदाह वृत्तिकृत्। 'यावन्तो हीत्यादि' (६)॥ तस्यामिति ( ) तस्यां (८) प्रधानस्योपकाराणां वाऽनवस्थायाम्, भोग्यस्य प्रकृतिमहदादेरभावे, पुंसो भोक्तृत्वाभावात् भावः स्यात् (८)। तस्य (९) भोक्तृत्वस्य, तल्लक्षणत्वात् (९) भोग्यसद्भावनियतत्वात्, अवस्थानाभावात् (९) स्वरूपासिद्धेः। तर्हि तस्य कारणावात्मलाभोऽभ्युपगन्तव्य इति (१४९–१–३), तस्याविर्भावस्य, न चेदेवं तदाविर्भावस्य नित्यं सत्त्वमसत्त्वं वा स्यादित्यर्थः। आत्मलाभे (४) उत्पत्तौ, तदेवं सांख्यमतस्यायुक्तत्वात् शब्दव्यक्त्यपत्वसमर्थनाय तदनुसरणं मीमांसकस्य न न्याय्यमित्युपसंहरति 'ततो नेत्यादि' (७)॥ किं कृतमभयणमिति (८) शब्दत स्वाभिकपदैःभाषणकारकस्यासम्ब स्य सत्यादित्यर्थः। 'तिरोधायकस्येत्यादि (९)' प्रौढिवादोऽयम्॥ वस्तुतः शब्दभावकप्रतिबन्धकवायुविशेषकल्पनागौर वमेव दूषणं बोध्यम्। किञ्चैवं कत्वत्वसादिप्रकारकप्रत्यक्षप्रतिबन्धकतावच्छेदिका अपि जातयो वायुसंयोगेषु कल्पनीयास्ताश्च परस्परं कोलाहलस्थलीयवायुसंयोगे संकीर्यन्ते, तदा कत्वाद्येकतरप्रकारकप्रत्यक्षस्याप्यभावादिति जातिरूपो विशेषो दुर्वचः, तथा वायूनामन्यतमत्वादिना प्रतिबन्धकत्वे चोदासीनप्रवेशाप्रवेशाभ्यां विनिगमनाविरह इति न किञ्चिदेतत्। ननु कोलाहले कत्वादिप्रकारणाय दोषाभावानां कत्वादिप्रत्यक्षे हेतुत्वमपेक्ष्य विजातीयनिमित्तपवनसंयोगहेतुत्वमेव न्याय्यः। तथा च विना प्रागभ्युपगमेऽपि शब्दस्य विजातीयनिमित्तपवनसंयोगाभावकृतमभयणं भविष्यतीति नानुपपत्तिः, प्रत्युत शब्दप्रागभावध्वं

१

माकल्पनलाघवेनोपपत्तिरेवेत्याशङ्क्याह–' ननु चेत्यादि ' (१३) तदश्रुतिरपीत्यत्र नैकान्तत इति योजनीयम् । तद्विकल्पे सम्भवादिति ( ) सदकारिकारणविकलेऽश्रुतेः सम्भवादित्यर्थः । तर्हि किमयमित्यादि (१४) ॥ योग्यशब्दसत्वे इन्द्रियमनोव्यापारसाकल्ये तत् प्रत्यक्षं स्यादेव निमित्तपवनसंयोगस्य ग्रामसन्निधानमात्रेण गन्ध इव शब्दे सर्वसन्निधानमात्रेणोपकारित्वात् विशिष्य शब्दप्रत्यक्षहेतुत्वे मानाभावादित्यर्थः । अत्र एतान् नैयायिको मीमांसकं पर्यनुयुङ्क्ते, त्वया चैत्रादेः स्त्रीयमैत्रशुकादिककारादेः प्रत्यक्षे चैत्रादिकर्मावच्छिन्नानां विजातीयसंयोगानां कारणत्वं वाच्यमित्यविशेषेऽपि मम त्वन्मतेऽपि तथा चैत्रादिककारादौ विजातीयवायुसंयोगो हेतुस्तत्तुल्यीयनिखिलशब्दप्रत्यक्षे च तत्तुल्यीयकर्मावच्छिन्नसमवाय इति कथं न लाघवमिति, अस्मन्मते तु वायो वायुः व्यापको नतु कारको व्यञ्जको वेति तदुपनीतशब्दस्य श्रोत्रेण संयोगसम्बन्धात्स्यैव प्रत्यक्षशब्दविषयकभावत्वे श्रोत्रसंयोगस्यैवैकहेतुत्वेन सकलोपपत्यापत्तिलाघवमिति भवेयम् । असामर्थ्येऽसम्बन्धेऽभ्युपगमे शङ्कुला श्रुतिः स्यात् क्रमश्रुतिश्च विरुध्येत । कार्यत्वे तु तदुत्पत्तिविज्ञानयोः क्रमइत्यपेक्षया क्रमोत्पत्तिप्रतिपत्त्योरविरोध इत्याह–किञ्च वर्णा इत्यादिना (१४९–२–५)ततः क्रमोत्पत्तिप्रतिपत्त्योरन्यथानुपपत्त्या न सर्वगता वर्णा नापि नित्या इत्यन्तेन ॥ ( १५०–१–५ ) ननु चैत्रादिककारादिप्रत्यक्षे विजातीयनिमित्तपवनसंयोगहेतुत्वाभावानुपपत्तिरिति चेत्, न, उक्तोत्तरत्वात्, किञ्च शब्दस्याकार्यत्वपक्षे तत्र चैत्रीयत्वादेरेवासिद्धिः, चैत्रजन्यत्वमेव हि चैत्रीयत्वं स्वाश्रयजन्यतावच्छेदकत्वेन चैत्रत्वमेव वा, एवं च शब्दविशेषात्तद्विशेषानुमानोच्छेदप्रसङ्गः । न च चैत्रइत्यभिव्यक्तिविषयत्वमेव चैत्रीयत्वं,

साक्षात्सन्निकर्षेणोपपत्तिरपेक्ष्येत्याशङ्क्याह–'ननु चेत्यादि' (१३) तदश्रुतिरपीत्यत्र नैकान्तत इति योजनीयम्। तद्विकल्पे सत्यभावादिति ( ) सहकारिकारणविकलेऽश्रुतेः सम्भवादित्यर्थः। तर्हि किमयमित्यादि (१४)॥ योग्यशब्दसत्त्वे इन्द्रियमनोव्यापारसाकल्ये ऽत्र प्रत्यक्षं स्यादेव निमित्तपवनसंयोगस्य श्रोत्रसन्निधानमात्रेण गन्ध इव घ्राणे कर्णसन्निधानमात्रेणोपकारित्वात् निश्चित्य शब्दप्रत्यक्षहेतुत्वे मानाभावादित्यर्थः। अत एवात्र नैयायिको मीमांसकं पर्यनुयुङ्क्ते, त्वया चैत्रादेः समीपस्थमनुष्यादिककारादेः प्रत्यक्षे चैत्रादिकर्णावच्छिन्नानां विजातीयसंयोगानां कारणत्वं वाच्यमित्यविशेषेऽपि मम त्व ध्वन्युत्पत्त्या चैत्रादिककारादौ विजातीयवायुसंयोगो हेतुस्तत्पुरुषीयनिःसृतशब्दप्रत्यक्षे च तत्पुरुषीयकर्णावच्छिन्नसमवाय इति कर्म न ज्ञापकमिति, अस्मन्मते तु वायो वायुः प्रापकः न तु कारको व्यञ्जको वेति तदुपनीतशब्दस्य श्रोत्रेण संयोगमात्रस्यैव ग्रहणाच्छब्दविषयकभावस्य श्रोत्रसंयोगत्वेनैकहेतुत्वमेव सकलोपपत्तावविलापकमिति भवेयम्। असामर्थ्यसम्भवेऽभ्युपगमे सहसा श्रुतिः स्यात् क्रमश्रुतिश्च विरुध्येत। कार्यत्वे तु पवनश्रोत्रविभागयोः क्रमकृतस्यपेक्षया क्रमोत्पत्तिप्रतिपत्त्योरविरोधमित्याह–किञ्च वर्णा इत्यादिना (१४९–२–५) ततः क्रमोत्पत्तिप्रतिपत्त्योरन्यथानुपपत्त्या न सर्वगता वर्णा नापि नित्या इत्यनेन॥ (१५०–१–५) ननु चैत्रादिकर्णावच्छिन्नप्रत्यक्षे विजातीयनिमित्तपवनसंयोगहेतुत्वाभावानुपपत्तिरिति चेत्, न, उक्तोत्तरत्वात्, किञ्च शब्दस्यावयवत्वपक्षे तत्र चैत्रीयत्वादेरेवासिद्धिः, चैत्रजन्यत्वमेव हि चैत्रीयत्वं स्यात्तज्जन्यतावच्छेदकतया चेन चैत्रत्वमेव वा, एवं च शब्दविशेषात्त्वविशेषानुमानोच्छेदप्रसङ्गः। न च चैत्रकृतपरिणामाभिव्यक्तिविषयत्वमेव चैत्रीयत्वं,

याय। ननु तर्हि वारमन्दस्तुकशारिकथैवादिप्रभवभेदेनैव शब्दनानात्वं वारादिस्त्वकार एक एवेति चेदथाह–स एवाय मकार इतीत्यादि, (४)॥ 'नहीति' (६) नहि कश्चित्केनचित्तारत्वेन कश्चिदपि प्रत्ययमर्थे एकत्वप्रत्ययो न स्यात्, किन्तु स्यादेव, तथा च सर्वस्यैकत्वं स्यादर्थवदित्यर्थः। चर्वकत्वे विशेषबुद्धेः प्रकारः कः स्यादथाह–'तच्छेदेत्यादि' (६) तच्छेदनिदेशा वर्णसमन्विनोऽप्रधाना विशेषाः कल्पिता अकारादयस्त्वबुद्धेस्त्वद्वासनायाः, यदिदमकाराद्येकत्वेऽपि तुल्यमित्याह–'सर्वस्याकारादेरपीत्यादि' (६)॥ प्रयत्नानन्तरीयको प्रयत्नजन्यः, शब्दस्य कार्यत्वे पुद्गलपर्यायत्वे मानिशायमिमाशङ्कते 'ननु श दस्येत्यादि' (९) ॥ आपाद्यापादकयोर्व्याप्यमानाभेयमित्युपरयति नेत्यादिना (१०) उभयत्र दर्शनामानप्रयोजकत्वोरत्पसुपदर्शयति–गन्धपरमाणूनामित्यादिना (१०)॥ चात्याऽस्यत्वमनियतमिति पुनराद्य इय प्रतिबन्धोपरयितुमाह–अथ मतमेतदित्यादिना (११) ॥ प्रतिबन्धिरनुत्तरमिति। मरुत्वसमानाधिकरणोभूतरूपा मावमरत्परप्रयोजकत्वमपत्र तुल्यत्वमुपदर्शयति–अथ तस्येत्यादिना, ( ) प्रसङ्गान्तरमपि गन्धद्रव्यदृष्टान्तेनैव निराक- रोति–शब्दपरमाणूनामित्यादिना (१५१–१–३), शब्दपरमाणुप्रतिघातोऽपीति (१४), कुड्यादिनाश्रयेति योजनीयम्। 'गन्धपरमाणूनामपीति' (१३) मत्राप्यामनादीनामदृष्टानां परिकल्पनाप्रसङ्ग इति सम्बन्धनीयम्। गन्धपुद्गलानामपि (७) इत्यत्रापि प्रतिपत्तिविशेषान्यथानुपपत्त्येत्यादि प्राक्तनं योजनीयम्। नन्वेवं पुद्गलपर्यायत्वेन पौद- वरेण च वर्णस्य नित्यत्वं माभूद्वानुपूर्वी त्वपौरुषेयी नित्या भविष्यतीत्याशङ्कते–'स्यादाकूतमिति' (१५१–२–४)॥ आनुपूर्वी वर्णाव्यतिरिक्तत्वात्सा अपि न नित्यत्वमित्यभिप्रायवानाह–तदप्ययुक्तमिति (९)॥ एतेन वैयाकर

णानां नित्यस्फोटवादोऽपि निरस्तः । आनुपूर्वीनिरासेन निष्कृष्टतद्रूपवाक्यस्फोटस्यापि निरासात्, अन्येषां तदभि पुक्तैरप्यनादृतत्वात्, यथाहि–" स्फोटवादमपवादवर्जितं, सत्स्वरं प्रकटयिष्यता मया । शाब्दिकभ्रमणयकर्म क्रामण, प्रक्रिया षडुविधा प्रदर्श्यते ॥१॥ वर्ण १ पद २ वाक्य ३ स्फोटाः, पदवाक्यगताखण्डौ ५ तौ । जातिस्फोटत्रयमित्यष्टौ स्फोटाः ८ स्मृतास्तद्बुधैः ॥२॥ तत्र १ वर्णस्फोटः, पचति राम इत्यादि प्रयुज्यमाने साधुशब्दे अन्तर्गतानां तिप्तिमिपादीनां वाचकत्वादिना सिद्धत्वात्, ये त्वाहुः प्रयोगान्तर्गतास्तिवादयो न वाचकास्तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः, एधांचक्रे प्रयोगादावादेशभूतणलादेरभावरूपस्य बोधकत्वासम्भवाच्च । किन्तु तैः स्मृता लकारादयः स्थादयश्च वाचकाः, लत्वस्य जातिरूपतया शक्यतावच्छेदकत्वौचित्यादव्यभिचाराच्च, आदेशानां तु भिन्नतया परस्परव्यभिचारित्वात्, लः कर्मणीत्याद्यनुशासनानुगुण्याच्च, न चादेशेष्वर्थबोधकमनुशासनमुपलभामहे इति, तान् प्रत्युच्यते व्यवस्थातः प्रयोगान्तर्गता वाचका न तु स्मृताः, पचतीत्यादौ लकारमविदुषां बोधात्, न च तेषां तिङ्विषये शक्तिभ्रमाद्बोधः, तस्य भ्रमत्वे मानाभावात्, आदेशिनामपि तथैवाकल्पैः स्वेच्छानुरोधेन भिन्नभिन्नानामभ्युपगमात्, का शक्ताः को नेति व्यवस्थानापत्तेश्च, सर्वेषां शक्तत्वे गौरवव्यभिचारौ दुरुद्धरौ । आदेशानां प्रयोगान्तर्गततया नियतत्वात् युक्तं तेषां शक्तत्वं तथा चादेशिस्मरणकल्पना नेति लाघवं, व्यवहर्तेरपि, व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः । स च श्रूयमाणतिङादिष्वेवेति त एव वाचका इत्यर्थः । तदेतदुन्यायतोऽपि लकारस्य बोधकत्वे मूल इत्यतोऽपि बोधः स्यात्, तादृशबोधे पचतीति समभिव्याहारोऽपि कारणमिति चेत्, तर्हि लाघवादस्तु तादृशसमभिव्याहारस्यैव वाचकत्वशक्तिः, अन्यथा लकारस्य वाचकत्वे समभिव्याहारस्य

ग्राप। मस्तु यदि वारमन्दहुक्कारिकाचैत्रादिभ्रमभेदेनैव शब्दनानात्वं गारादिस्त्वकार एक एवेति चेदत्राह—स एवाय मकार इतीत्यादि, (४)॥ 'नहीति' (६) नहि कथञ्चित्केनचित्सारूप्येन कचित्पयपि प्रत्ययमर्थे एकत्वप्रत्ययो न स्यात्, किन्तु स्यादेव, तथा च सर्वस्यैकत्व स्यादखर्वगदित्यर्थः। वर्णैकत्वे विशेषबुद्धेः प्रकारः कः स्यादत्राह—'तच्छेदेत्यादि' (६) तच्छेदविशेषा वर्णसम्बन्धिनोऽप्रधाना विशेषाः कल्पिता अकारादयस्त्वपद्गलेस्त्वद्वासनायाः, तदिदमकारादेकत्वेऽपि तुल्यमित्याह—'सर्वस्याकारादेरपीत्यादि' (६)॥ प्रयत्नानन्तरीयको प्रयत्नजन्यः, शब्दस्य कार्यत्वे पुद्गलपर्यायत्वे नानित्यपतिमाशङ्कते 'ननु शब्दस्येत्यादि' (९) ॥ आपाद्यापादकयोर्व्याप्यमाधाभेदमित्युपरयति नेत्यादिना (१०) उभयत्र दर्शनाभावप्रयोजकत्वौल्यमुपदर्शयति—गन्धपरमाणूनामित्यादिना (१०)॥ चास्पाऽदृश्यत्वमनियतमिति पुनराप इप प्रतिबन्धोपरयितुमाह—अथ मतमेतदित्यादिना (११) ॥ प्रतिबन्धिरमुत्तरमिति। महत्त्वसमानाधिकरणोद्भूतरूपा मानमदृश्यत्वप्रयोजकमुभयत्र तुल्यमुपदर्शयति—अथ तस्येत्यादिना, ( ) प्रसङ्गान्तरमपि गन्धद्रव्यदृष्टान्तेनैव निराक रोति—शब्दपरमाणूनामित्यादिना (१५१–१–२), शब्दपरमाणुप्रतिघातोऽपीति (१४), कुड्यादिनास्त्येवेति पूर्वेण योजनीयम् । 'गन्धपरमाणूनामपीति' (१३) अत्राप्यागमनादीनामदृष्टानां परिकल्पनाप्रसङ्ग इति सम्बन्धनीयम्। शब्दपुद्गलानामपि(४) इत्यत्रापि प्रतिपत्तिविधेयान्यथानुपपत्त्येत्यादि प्राक्तनं योजनीयम्। नन्वेवं पुद्गलपर्यायत्वेन पौद्ग लत्वेन च वर्णस्य नित्यत्वं मा भूत्तदानुपूर्वी त्वपौरुषेयी नित्या भविष्यतीत्याशङ्कते—'स्यादाकूतमिति' (१५१–२–४)॥ आनुपूर्व्या वर्णाव्यतिरिक्तत्वात्तस्या अपि न नित्यत्वमित्यभिप्रायवानाह—तदप्ययुक्तमिति ( ९ ) ॥ एतेन वैयाकर-

णानां नित्यस्फोटपक्षोऽपि निरस्तः । आनुपूर्वीनिरासेन भिन्नक्षणरूपपाकस्फोटस्यापि निरासात् अस्मिन् तदभि-
पुक्तैरप्यनादरत्वात्, तथाहि—" स्फोटवाचमपवाचवर्जितं, तत्परं प्रकल्पितकल्पना मया । शाब्दिकमणायकर्म
कामेन, प्रक्रिया पटुधिया प्रदर्श्यते ॥१॥ वर्ण १ पद २ वाक्य ३ इत्येवं, पदवाक्यगायकणकौ ५ तौ ।
जातिस्फोटत्रयमित्यष्टौ स्फोटाः ८ स्फुतास्तथूक्षीः ॥२॥ तत्र १ वर्णस्फोटः, यथापि राम इत्यादि प्रयुज्यमाने साधुशब्दे
अन्तर्गतानां तिप्‌विसर्गादीनां वाचकत्वादिना सिद्ध्यति, ये साधुः प्रयोगान्तर्गतास्तिबादयो न वाचकास्तेषां वाचकत्वेन ज्ञकस्मान्
स्थापयेः, एषांचकै असेरपावाचारेस्तभूयस्तुगावेरमापरूपस्य बोधकस्यासम्भवाच । किन्तु ते स्फुता लकारादयः स्वावयव वाच
का, सत्वस्य आविरूपतया धम्यतावच्छेदकस्यौचित्याव्यभिचाराच, आदेशानां तु भिन्नतया परस्परव्यभिचारित्वात्, ला
कर्मणीत्याद्यनुशासनानुगुण्याच, न चादेशपर्यबोधकमनुशासनमुपलभामह इति, तान् प्रत्युच्यते व्यवस्थातः प्रयोगान्तर्गता
वाचका न तु स्मृताः, पचतीत्यादौ लकारमविदुषां बोधात्, न च तेषां सिद्धविषये शक्तिभ्रमाद्बोधः, तस्य भ्रमत्वे मानाभा
वात्, आदेशिनामपि तद्वैपाकस्मैः स्वेच्छानुरोधेन भिन्नभिन्नानामभ्युपगमात्, कः शक्तः को नेति व्यवस्थानापत्तेश्च,
सर्वेषां शक्तत्वे गौरवव्यभिचारौ दुर्वारौ । आदेशानां प्रयोगान्तर्गततया नियतत्वात् युक्तं तेषां शक्तत्वं तथा चादेशिस्मर
णकल्पना गतिलाघवं, व्यवहृतेरपि, व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः । स च श्रूयमाणतिबादिष्वेवेति त एव वाचका
इत्यर्थः । तदेतन्न्यायतोऽपि लकारस्य बोधकत्वे मूल इत्यतोऽपि दोषः स्यात्, शाब्दबोधे पचतीति समभिव्याहारोऽपि कार
णमिति चेत्, तद्बोधकत्वात्तु तादृशसमभिव्याहारस्यैव वाचकत्वशक्तिः, अन्यथा लकारस्य वाचकत्वं समभिव्याहारस्य

कारणत्वं चेत्तदुभयं कल्प्यमिति गौरवं स्यात्। तथा च तादृशवर्णसमभिव्याहारस्य वाक्यसमभिव्याहृता वर्णा चेत्यत्र विनिगमकाभावात् प्रयोगान्तर्गता वर्णा वाचकाः सिद्ध्यन्ति, कचिकोः पर्युमाननाशानयस्त्वम्यपस्थातोऽपि तेषां तत्रासिद्धिः, आदेशानां वाचकत्व एव हि विकरणेन भावनायामानत्यादिना कर्तरि शक्तिरित्युपपद्यते विभागाः, न च शानजादौ तद्विलक्षणार्थः, आश्रयः शानचश्च इत्यस्तु " कर्तरि कृत् " इत्यनुशासनादिति वाच्यम्। स्थान्यर्थेन निराकाङ्क्षतया शानजादौ कर्तरीत्यस्याप्रवृत्तेः, अन्यथा घञादावपि तदापत्तेः, न च देवदत्तः पचमान इति सामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादिति वाच्यम्, पचतितरां मैत्रः पचतिकल्पं मैत्र इत्यादिष्वपि तदापत्तेरिति दिक् १॥ एवं वर्णस्फोटे सिद्धे पदस्फोटोऽपि २ सिद्ध एव, समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकतायाः सिद्धिध्रौव्यात्, प्रतिवर्णसर्वस्मरणस्यानुभवविरुद्धत्वात्, प्रत्येकवर्णानामर्थवत्त्वेन प्रातिपदिकत्वापत्तौ " नलोपः प्रातिपदिकान्तस्य " इत्यादिभिर्धन वनमित्यादौ नलोपापत्तेश्च, एतत्परमतं एव वाचकत्वं प्रत्येकत्वमनौचित्यात्, तस्य व्यासज्यवृत्तित्वे मानाभावात्, पूर्वपूर्ववर्णानुभवजन्यसंस्कारसमवेतचरमवर्णस्यार्थधीजनने सहकारित्व इति न तु भाष्योपारम्भादर्शपीः, " सुप्तिङन्तं पदम् " इति पदेऽपि घटेनेत्यादौ प्रकृतिप्रत्ययविभागस्य स्थलनादिसमुदायादेश इव दुर्ज्ञानत्वात् पदस्फोटः स्वीकार्यः २॥ एवं हरेऽव विष्णो वेत्यादौ प्रत्येकपदग्रहणेऽपि समुदायशक्तिमानाच्छाब्दबोधोदयाद्वाक्यस्फोटोऽपि ३ सिद्ध एव। वस्तुतः पदैः पदार्थावबोधो वाक्येन वाक्यार्थावबोध इति यथा संवादिकाः पदेष्विव वाक्यस्यापि शक्तिर्वाच्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ। अन्यथा घटः कर्मत्वमानयनं कृतिरित्यादौ विपरीतव्युत्पत्तिरहितस्यापि बोधप्रसङ्गात्, तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरकर्मत्ववाचकमिम

न्वेऽस्तत आनयनार्थकधातोस्तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानमपि हेतुरिति चेत्, तर्हि सिद्धो वाक्यस्फोटः २, घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानस्येव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात्, अर्थोपस्थापकज्ञानविषयशब्दशक्तिज्ञानकारणत्वस्यैव शक्तित्वात्। वाक्यार्थस्यापूर्वत्वात् कथं तत्र शक्तिग्रह इति चेत्, अन्विताभिधानवादे पदेऽपि कथम्, अन्वयस्यापूर्वत्वात्। यदि च पदशक्तिः पदार्थांशे ग्रहाऽन्वयांशे चाज्ञातोपयुज्यत इति कुब्जशक्तिवादः, तदा ममापि वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्यः, अन्विते पदशक्तिग्रहो वृद्धव्यवहारदर्शनसहकृतेन मनसा चेत्, वाक्येऽपि तुल्यमेतत्, अत एव सर्वत्र वाक्यार्थो लक्ष्य इति भाट्टाः। वस्तुतः समुदितार्थे विशिष्टवाक्यस्येव प्रथमं शक्तिग्रहस्तदनन्तरमावापोद्वापाभ्यां प्रत्येकं तद्ग्रह इत्युपजीव्यत्वाद्वाक्यस्फोट आश्रयणीयः। न च पदत्वं वाक्यत्वं वा दुर्ग्रहम्, चरमवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वरूपस्य तस्य सुग्रहत्वात्, वाक्यं पदं चाखण्डमेव, न तु वर्णसमूहोऽनन्तवर्णकल्पने मानाभावाद्वर्णोत्पादकत्वाभिमतवायुसंयोगनिष्ठवैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसम्भवात्, उक्तं हि देवताधिकरणे भामत्यां, तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यत इति। न चैवं वाचकोऽपि वायुसंयोग एव स्यात्, प्रत्यक्षोपलभ्यककारादेरेव तत्त्वस्यानुभविकत्वात्। तथा च तदेवेदं पदं तदेवेदं वाक्यमित्यादिधियाऽखण्डस्फोटः सिद्ध्यति। एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटाननुभवात् श्रूयमाणवर्णानामेव वाचकत्वमित्यपास्तम्। तेषां स्फोटाभिव्यक्त्वाभावात्, उक्तवायुसंयोगानां मध्ये केषांचिद् गत्वेन केषांचिदौत्वेन केषांचिद्विसर्गत्वेनाभिव्यञ्जकत्वावश्यानुपपत्तिः, अव्यवहितोत्तरत्वसम्बन्धेन घत्वस्य टकारे ग्रहादेतादृशपदज्ञानकारणताया

वाचकत्वं चेत्सुमर्थं कल्प्यमिति गौरवं स्यात् । तथा च तावद्वर्णसमभिव्याहारस्तावद्वर्णसमभिव्याहृता चर्चा चेत्यत्र विनिगमनाभावात् प्रयोगान्तर्गता वर्णा वाचकाः सिध्यन्ति, कृत्तिङोः कर्तृभावनावाचकत्वव्यवस्थातोऽपि तेषां तत्सिद्धिः, आदेशानां वाचकत्व एव हि विकरणेन भावनावाचकत्वादिना कर्तरि शक्तिरित्युपपद्यते विभागः, न च शानजादौ कृतिर्लकारार्थ , आश्रयः शानजर्थः इत्यस्तु " कर्तरि कृत् " इत्यनुशासनादिति वाच्यम् । स्वान्वयेन निराकाङ्क्षतया शानजादौ कर्तरीत्यस्याप्रवृत्तेः, अन्यथा घञादावपि प्रसज्येत, न च देवदत्तः पचमान इति सामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादिति वाच्यम्, पचतिकर्ता चैत्रः पचतिकल्पं चैत्र इत्यादिष्वपि तद्दर्शनादिति दिक् १ ॥ एवं वर्णस्फोटे सिद्धे पदस्फोटोऽपि २ सिद्ध एव, समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकतायाः सिद्धिप्रायत्वात्, प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात्, प्रत्येकवर्णानामर्थवत्त्वेन प्रातिपदिकत्वापत्तौ " नलोपः प्रातिपदिकान्तस्य " इत्यादिभिर्धेन धनमित्यादौ नलोपापत्तेश्च, एकवरमवर्ण एव वाचकत्वं शक्तिकल्पनौचित्यात्, तस्या व्यासज्यवृत्तित्वे मानाभावात्, पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहचरमेवार्थधीजनने सहकारिम इति न तन्मात्रोच्चारणादर्थधीः, " सुप्तिङन्तं पदम् " इति पक्षेऽपि घटेनेत्यादौ प्रकृतिप्रत्ययविभागस्य पञ्चसादिसमुदायादेश इव दुर्ज्ञानत्वात्पदस्फोटः स्वीकार्यः २॥ एवं हरेऽव विष्णो चेत्यादौ प्रत्येकपदज्ञानेऽपि समुदायशक्तिज्ञानाज्जन्यबोधोदयाद्वाक्यस्फोटोऽपि ३ सिद्ध एव । वस्तुतः पदैः पदार्थावबोधो वाक्येन वाक्यार्थावबोध इति पदार्थशक्तिः परैरपि वाक्यार्थशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ । अन्यथा घटः कर्मत्वमानयनं कृतिरित्यादौ विपरीतव्युत्पत्तिरहितस्यापि बोधप्रसङ्गात्, तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरकर्मत्ववाचकविभ-

स्नेन ज्ञानधनार्थरूपालोचन आख्यातस्य नामभिव्याहारः कारणमिति कार्यकारणभावज्ञानमपि हेतुरिति चेत्, तर्हि सिद्धो वाचकस्फोटः पदादिस्मारकबोधे बोधकतारूपशक्तिज्ञानस्येव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकता रूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात्, अर्थोपस्थापकज्ञानविषयपदसम्बन्धस्मृतिज्ञानकारणस्यैव शक्तित्वात्। वाक्यार्थस्या पूर्वत्वात् कथं तत्र शक्तिग्रह इति चेत्, अन्विताभिधानवादे पदेऽपि कथम्, अन्वयस्यापूर्वत्वात्। यदि च पदशक्तिः पदार्थांशे ज्ञाताऽन्वयांशे चाज्ञातोपयुज्यत इति कुप्तशक्तिवादः, तदा ममापि वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्यः, अत एव सर्वत्र वाक्यार्थो लक्ष्य इति मतान्तरे शक्तिग्रहो व्यवहारस्वजनसहकृतेन मनसा चेत्, वाक्येऽपि तुल्यमेवेत्, प्रत्येकं तद्ग्रह इत्युपजीव्यत्वाद्वा भाव्यः। वस्तुतः समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहस्तदनन्तरमावापोद्वापाभ्यां चरमवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वरूपस्फोट आश्रयणीयः। न च पदत्वं वाक्यत्वं वा दुर्वचम्, न तु वर्णसमूहोऽनन्तवर्णकल्पने मानाभावात्, वर्णोत्पादकत्वाभिमतवायुसंयोगनिष्ठ वैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसम्भवात्, उक्तं हि देवताधिकरणे भामत्याम्, तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यत इति। न चैवं वाचकोऽपि वायुसंयोग एव स्यात्, प्रत्यक्षोपलभ्यककारादेरेव तत्तत्स्यादनुभविकत्वात्। तथा च तदेवेदं पदं तदेवेदं वाक्यमित्यादिविधयाऽखण्डस्फोटः सिद्ध्यति। एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटाननुभवात् भूयमाणवर्णानामेव वाचकत्वमित्यपास्तम्। तेषां स्फोटातिरिक्तत्वाभावात्, उक्तवायुसंयोगानां मध्ये केषाञ्चिद् गत्वेन केषाञ्चिदौत्वेन केषाञ्चिद्विसर्गत्वेनाभिव्यञ्जकत्वासम्भवानुपपत्तिः, अव्यवहितोत्तरत्वसम्बन्धेन घत्वस्य टकारे सत्त्वादेव पदज्ञानकारणताया

अविचारात्, परं स्वव्यवहितोत्तरत्वं स्वसमानाधिकरणध्वंसोत्पत्तिक्षणवृत्तिज्ञानविषयत्वं वाच्यम्, अत एव घटज्ञानानन्तरज्ञानविषयस्वरूपा टस्यानुपूर्व्यादिनैयायिकमतानां प्रवादः, एतेन पर्यायस्थलेष्वेक एव स्फोटो नाना वा ? नाद्यो घटपदे गृहीतशक्तिकस्य कलशप दात् बोधप्रसङ्गात्, न च तत्पर्यायाभिव्यञ्जकशक्तिग्रहस्तत्पर्यायजन्यबोधे हेतुरिति वाच्यम्। एवं प्रतिपर्यायं शक्तिग्रहप्रौव्येण तत्तत्पर्यायशक्तिग्रहहेतुतायाः उचितत्वात् तथा सति शक्तिग्रहत्वेनैव हेतुत्वे लाघवात्। अन्यथा तत्पर्यायाभिव्यञ्जकशक्तिग्रहत्वेन हेतुत्वे गौरवात्। न द्वितीयोऽनन्तपदार्थानां तेषां शक्तिं चापेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनाया लघुत्वादिति परिमलोक्तमपास्तम्। पर्यायेष्वनेकशक्तिस्वीकारस्य सर्वसिद्धत्वात् तदवच्छेदकानुपूर्व्या बोधोपपादितत्वात्, शब्दकौस्तुभे तु वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटोऽन्यथा कपालातिरिक्तपटासिद्धिप्रसङ्गादित्युक्तम्, नन्वेवं पदस्यासत्यत्वे शास्त्राप्रामाण्यप्रसङ्गस्तत्र प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादिति चेत्, न। वास्तवप्रबोधनाय वेदान्ते कोशपञ्चकव्युत्पादनवच्छास्त्रस्य स्फोटबोधनाय व्याकरणे प्रकृतिप्रत्ययादिव्युत्पादनोपपत्तेः। न च प्रत्यक्षस्य स्फोटस्य ग्रहे किं शास्त्रोपायापेक्षयापीति वाच्यम्। उपायस्योपायान्तरादूषकत्वात्, तथा च व्याकरणाभ्यासजन्यज्ञाने वेदार्थं कल्प्यते, मन्त्रजन्याभिधार्थस्मरणे, वेदान्तजन्यमिव ब्रह्मज्ञाने, तस्य च ज्ञानस्य यज्ञादीनामन्तःकरणशुद्धाविव शरीरादिशुद्धावुपयोगः, साक्षात्परम्परया वा स्वर्गमोक्षादिहेतुत्वं च। तदुक्तं वाक्यपदीये—"तद् द्वारमपवर्गस्य, वाङ्मलानां चिकित्सितम्। पवित्रं सर्वविद्याना-मधिविद्यं प्रकाशते ॥ १ ॥ इदमाद्यं पदस्थानं, सिद्धिसोपानपर्वणाम्। इयमामोक्षमाणाना-मजिह्मा राजपद्धतिः ॥२॥" इति। न चालीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोध इति वाच्यं, रेखागवयन्यायाश्रयणात्। अथ स्फोटस्य वर्णानां च नित्यतया ककारोत्पत्त्यादिप्रत्ययः कथमिति चेत्,